# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




२० वर्षे ३-४ अङ्कौ

संवत् २०२२

प्रकाशनतिथिः

चैत्रपूर्णिमा, संवत् २०२३

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

प्रधानसम्पादकः

**श्रीबलदेव उपाध्यायः, साहित्याचार्यः, एम० ए०**

सहायकसम्पादकः

**व्रजवल्लभद्विवेदो दर्शनाचार्यः**




**२० वर्षे ३-४ अङ्कौ**

# विषयानुक्रमणिका

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

२० वर्षः } फाल्गुनपूर्णिमा, संवत् २०२२ { ३-४ अङ्कौ

## [1]स्वागतभाषणम्

आदरणीयाः कुलपतयः, प्रतिकुलपतयः, सिद्धीनां मर्मवेत्तारो विद्वांसः! सिद्धिवाङ्मये श्रद्धालवो महानुभावाः सज्जनाः! देव्यश्च!

अयं हि महतो हर्षस्य विषयो यदद्य वयमस्माकं पूर्वजैर्महत्या साधनया समुपार्जितायाः सिद्धिविद्यायाः सम्बन्धे विमर्शं कर्तुम्, पुनः प्रतिष्ठापनस्य उपायान् निश्चेतुम्, तद्विषये जनचेतनां जागरयितुम्, अस्यां सिद्धिरहस्याभिव्यञ्जिकायां पुराणगोष्ठ्यामस्य संस्कृतविश्वविद्यालयस्य पुण्यमये प्राङ्गणे सोत्सवं समवेताः स्मः। तत्र सर्वप्रथममेतस्य महतो विश्वविद्यालयस्य सर्वविधसदस्यानां पक्षेण आत्मनः पक्षेण च अत्रभवतां समेषां विदुषां स्वागतं व्याहरन् हार्दिकं सभाजनं करोमि। नानाबाह्योपकरणसम्पदाविधुरमपि श्रद्धया समुपनीतमस्मदीयं सम्मानभावं प्रमुदितेन मनसा स्वीकरिष्यन्ति श्रीमन्तः सज्जनाः।

---

१. वाराणसेयसंस्कृतविश्वविद्यालयेन आयोजितायाः पुराणगोष्ठ्या अवसरे (१-९-६५ दिनाङ्के) स्वागताध्यक्षपदेन प्रदत्तमिदं भाषणं वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिना श्रीमता सुरतिनारायणमणित्रिपाठिमहोदयेन। —संपादकः

भारतीयायाः संस्कृतेर्विद्यायाश्चावबोधार्थं पुराणं विश्वकोष (एनसाइक्लोपीडिया)भूतमिति प्रसिद्धमेव। अस्मिन् वाङ्मये नैकविधानां विद्यानां सङ्केतो विवरणानि चोपलभ्यन्ते, इमाश्च विद्या इदानीमपि विस्मयमावहन्ति नितराम्। अलौकिककर्मणां विशिष्ट उल्लेखोऽपि पुराणानामेकं वैशिष्ट्यमिति ज्ञेयम्। इमानि अलौकिकानि कर्माण्येव सिद्धय इत्युच्यन्ते शास्त्रेषु। यैः खलु नियमैः प्रक्रियाभिर्वा सिद्धयः प्रजायन्ते, तेषां ज्ञानमावश्यकमेव। अधुना एवंविधस्य ज्ञानस्यापरिहार्यताऽभ्युपेया, यतो ह्यद्य न कोऽपीन्द्रियागोचरमतीन्द्रियं वस्तु अस्तीत्यभ्युपगच्छति।

अस्याः पुराणगोष्ठ्या इदमपि श्लाघ्यं कर्म स्याद् यदियं सिद्धिरहस्योद्घाटनं न्यायानुमोदितरीत्या जिज्ञासुभ्यः कुर्यादिति। येन पुराणं नाम कल्पितवस्तुप्रतिपादकं शास्त्रमित्यपवादो दूरीकृतो भवेत्; किञ्च अलौकिकीषु घटनासु श्रद्धाबुद्धिरुत्पन्ना स्यात्; अपि च जना विभूत्यधिगमाय प्रयत्नवन्तो भवेयुः।

इयं गोष्ठी दिनत्रयव्यापिनी भविता। विवेचनीया विषया इत्थं विभाजिताः– प्रथमे दिवसे क्रियात्मकसिद्धीनाम्, द्वितीये दिवसे ज्ञानात्मकसिद्धीनाम्, तृतीये (अन्तिमे) दिवसे इच्छात्मकसिद्धीनां प्रतिपादनं भविष्यति।

विषय-बाहुल्याद् एक एव विषयो नैकविभागेषु सन्निविष्टो भवितुमर्हति; विचारसौकर्यार्थमेव उपर्युक्तः क्रम आश्रितः।

एकैकसिद्धिविचारे इमे चत्वारः प्रश्नाः समाधेयाः—

१—सिद्धीनां स्वरूपं पुरा कीदृशमासीत्?

२—तदा सिद्ध्युपलब्धेः प्रक्रिया कीदृश्यासीत्?

३—अधुना अलौकिकशक्तीनां कीदृशः परिचय उपलभ्यते?

४—एतादृशशक्तीनामधिगमाय केषां साधनानामुपयोगः करणीयः?

एतादृशानां प्रश्नानां प्रमाणसङ्गतं समाधानं यथाऽऽविष्कृतं स्यात् तथा यथाशक्ति प्रयतनीयमिति निवेद्यते विद्वत्सु।

का नाम सिद्धिः? तत्प्रकाराश्च कतिविधाः? प्राचीने युगे कथं सिद्धयः साफल्यमभजन्? आधुनिके च समये कथं तासां ह्रास उपलक्ष्यते? इत्यादिप्रश्नानां लघ्वक्षरैरुत्तरं तावत् प्रस्तूयते।

कयापि लोकातीतशक्त्या अलौकिकेन वापि सामर्थ्येन कस्यचन अद्भुतस्य पदार्थस्य या सृष्टिर्विलोक्यते, सा खलु सिद्धिसत्तानिर्धारिणी। अद्भुतपदार्थजननशालिनी अलौकिकसामर्थ्यप्रकाशिका लोकातीतशक्तिरेव 'सिद्धि'पदेन सन्ततं व्यपदिश्यते तज्ज्ञैः। सिद्ध्याः पञ्च प्रकारान् आदिशति महर्षिः पतञ्जलिः। ते च यथा—"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः।" तत्र प्रथमा जन्मसिद्धिः। स्वर्गेऽपि भोगभागीयात् कर्मणो मनुष्यजातीयाचरितात् कुतश्चन निमित्ताल्लब्धपरिपाकात् क्वचिद् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिः, सा जन्मसिद्धिरणिमाद्या भवति।

द्वितीया ओषधिजा सिद्धिः पारदादिरसायनानामुपयोगाद् जायमाना सिद्धिरोषधिजन्यत्वाद् ओषधिसिद्धिः। रसायनशास्त्रप्रणेता बौद्धो नागार्जुनाचार्यः स्वीयरससिद्धिग्रन्थेऽस्या विविधान् प्रकारान् उपयोगांश्च विशिष्टतयाऽभिव्यनक्तीति तत एव उन्नेया जिज्ञासुभिः। रसायनस्य माहात्म्यप्राचुर्येणैव गोरक्षनाथाद्या महासिद्धाः कालचक्रं विजित्य साम्प्रतमपि महीं विचरन्ति, स्वदर्शनेन भक्तान् अनुगृह्णन्ति, स्वोपदेशेन च जिज्ञासून् कृतार्थयन्तीति सिद्धनये निश्चितो राद्धान्तः।

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजं भयम्॥

इति पद्ये भर्तृहरिः शृङ्गारादिरससिद्धकाव्यप्रणेतॄन् अजरामरयशःकौमुदीसमुज्ज्वलचरितान् कवीश्वरान् यथा निर्दिशति, तथैव जरामरणभयराहित्याद् अलौकिककायसम्पन्नान् पारदसिद्धान् कवीश्वरानप्युल्लिखति।

मन्त्राभ्यासेन जायमाना सिद्धिस्तु तृतीया। मन्त्राणामलौकिके प्रभावे संदिहानाः साम्प्रतमपि वर्तन्तां केचन महाभागाः, परन्तु मन्त्रजा सिद्धिर्वास्तविकीति पुराणानां दृढं समुपजृम्भते प्रामाण्यम्। अनया सिद्ध्या आकाशगमनादीनि कार्याणि स्वतो निष्पद्यन्ते।

तपसा सिद्धिश्चतुर्थी। तपःप्रभावेण तापसानां संकल्पसिद्धिर्भवति। कामरूपी यत्र तत्र कामग इति तात्पर्यमभिव्यनक्ति व्यासः स्वीयव्यासभाष्ये। अस्याय-

मर्थः—यदेव कामयतेऽणिमादि; तदेव भवति। यत्र कामयते श्रोतुं वा मन्तुं वा, तत्र तदेव शृणोति मनुते वेति। यदेव यत्र कामयते श्रोतुं सुधानिःस्यन्दसरसाणि अप्सरसां किन्नराणां वा मुखात् प्रश्च्योतमानानि गीतादीनि, तत् तत्रैव शृणोति। यन्मनोहररूपसम्पदाभिव्यक्तवर्णानि देवशरीराणि कामयते द्रष्टुं तत् तत्रैव पश्यत्याभ्यामेव स्वीयविलोचनाभ्याम्।

समाधिजा सिद्धिस्तु पञ्चमी। पातञ्जलयोगदर्शनस्य तृतीये विभूतिपादे विस्तरशः प्रतिपादितोऽयं विषयः। यथा—"श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम्" (३।४१) इति पातञ्जलं सूत्रम्, अर्थात् श्रोत्राकाशयोः सम्बन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते। इत्थमेव समाधिजन्या नानासिद्धयः समुपजृम्भन्ते।

इत्थं सिद्धीनां सामान्यतो निरूपणम्। अस्यां पुराणगोष्ठ्यां दिनत्रयव्यापिन्यां विमर्शनिचयसौविध्याद् विमर्शकविवेकसारल्याद् मूलतः पञ्चप्रकाराणामपि सिद्धीनां प्रकारत्रयमेव निश्चिनुमः। तत्र प्रथमा सिद्धिः कर्मजन्या, द्वितीया ज्ञानजा, तृतीया इच्छाजन्या चेति। आसु सिद्धिषु यत्र कुत्राप्यंशे सिद्धेऽपि गतार्थत्वे विचारकाणां कृते सौविध्यप्रदानाय साम्प्रतं सिद्धीनां प्रकारत्रयस्यैव स्वीकरणं नानुपयुक्तमिति नूनमुन्नेतुं पारयन्तु विद्वज्जनाः।

अयि महाभागाः! विराजते सिद्धीनां साम्राज्यं विश्वस्मिन् जगतीति नातितिरोहितमितिहासविदां विपश्चिताम्। न केवलं भारते वर्षे, न वा केवलं वेदपुराणादिष्वेव ग्रन्थेषु सिद्धीनां चर्चा समुपलभ्यते, भारतेऽपि जैनग्रन्थेषु बौद्धग्रन्थेषु निबद्धे महीयसामाचार्याणां जीवनचरिते आसां सिद्धीनां दृढं सङ्केतं समुपलभामहे। पाश्चात्त्यजगति च धर्माचार्याणां जीवनचरिते सिद्धयः कमपि चमत्कारं जनयन्तीति तच्चरितविमर्शकानां नापरोक्षं प्रेक्षावताम्। तथा च ख्रिस्तमत-संस्थापकस्य 'क्राइस्ट' इति नामजुषो धर्माचार्यस्य विपये एतादृशी बह्वीः सिद्धीः समुद्गिरन्ति तत्रत्याः 'न्यू टेस्टामेण्ट' नामकग्रन्थस्य विभिन्नांशानां लेखकप्रवराः। मोहम्मदीयधर्मसंस्थापकस्य 'मुहम्मद'महाभागस्य जीवनचरिते गरिमेति ख्यातायाः सिद्ध्याः सत्तां बहुशो विनिर्दिशति दाराशिकोहनामा उपनिषद्रसिकः प्रख्यातो लेखकः स्वीये 'रिसाल-ए-हकनुमा' नाम्नि पारसीकभाषानिबद्धे ग्रन्थे। स कथयति यद् आरब्यमरुभूमौ तालवृक्षस्य छायायां स्वोष्ट्रोपरि समासीनो मुहम्मदसाहबो

यदा ध्याने निमग्नो बभूव, तदा उष्ट्रस्तस्य परिबृंहितं देहभारं सोढुमशक्नुवन् शनैः भूमौ उपविवेशेति । इयमेव गरिमेति नाम्ना ख्याता सिद्धिः, यत्र देहस्य भार एतावान् परिबृंहितो भवति, यदधिष्ठितः पशुर्भारं वोढुं नितान्तमशक्तः पदात् पदमपि चलितुमसमर्थो भवति ।

मध्ययुगीयख्रिष्ट्रीयधर्मानुयायिनां भूयसां साधूनां साध्वीनां योषितां च जीवन-चरिते प्रार्थनासमये स्वासनादुत्थानम्, आकाशगमनादिकां च विचित्रां सिद्धिं समामनन्ति तच्चरितनिबद्धारः । सेण्ट अगास्टिन-सेन्ट फ्रान्सिस-सेन्ट टेरेसा-आदि बहूनां साधकानां जीवने बहुशोऽनुभूतमिदं तथ्यं यत् ते प्रार्थनासमये स्वासनेभ्योऽन्तराले उत्तिष्ठन्ति, तेषां देहयष्टिस्तत्र क्वचिद् अवतिष्ठते, परं प्रार्थनाया अवसाने शनैः शनैराकाशात् तेषां देह आसनेऽवतरति । योगवासिष्ठे तु आकाशगमनादिसिद्धीनां बहुशः समालम्भो न केषामपि विस्मयाय कल्पेत विदुषाम् । तत्र वसिष्ठः स्वाभिमतमभिव्यनक्ति पद्येनैतेन—

अनात्मविद् अमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यकर्मक्रियाः कालशक्त्या प्राप्नोति राघव ॥

इत्थं सिद्धीनां सार्वभौमी सार्वकालिकी च समुपलब्धिः संदिहानानां सन्देह-विघटनाय अलं भविष्यति । सिद्धयो न केवलं भारते वर्षे; प्रत्युत अस्मिन् विपुले जगति प्राचीने युगे समभूवन्, वर्तमाने काले सम्भवन्ति, भविष्ये च सम्भविष्यन्तीति नहि कश्चिदत्र विवादस्यावकाशः ।

समुपलभामहे सिद्धीनां फलाविर्भावकर्मणि ध्रुवं कांश्चित् प्रयोजकहेतून् । सत्त्वगुणाधिक्यप्रयोजनीये प्राचीने युगे सिद्धीनां भूयसीं फलाभिव्यञ्जनशक्तिं साक्षात् कुर्मः । सत्त्वप्राचुर्योपजायमानतपसः प्राबल्यात्, आचरणस्य विशुद्धेः, स्वार्थभावनाया मानवेषु विशेषतो वैधुर्यात्, परोपकारपरायणानां कर्तव्यबुद्धि-निष्ठानां जनानां कार्येषु परोपकारबुद्धेः सन्ततं प्राचुर्यात्, त्यागस्य च माहात्म्यात् सिद्धीनां फलाविर्भावकर्मणो नूनं समुपजृम्भते किमपि माहात्म्यम् । तदा पूर्वोक्ता सिद्धयः सहजरूपेणैव जगति साक्षात् क्रियन्ते स्म जनैः । पुराणनिर्दिष्टसिद्धीनां स एव गौरवमयः कोऽपि समयः, स एव महाजनैः क्षुण्णः कोऽपि हृदयावर्जकः

पन्थाः, यदा यत्र च ताः स्वमहनीयोत्कर्षेण जनानां मनांस्यात्मानं प्रत्याकृष्टुं सर्वथा समर्था अभूवन्।

आधुनिके समये महोत्कर्षशालिनीनामपि सिद्धीनां सत्ताविचारणप्रस्तावे कमपि ह्रासमेव तासां विलोकयामः। साम्प्रतं सिद्धीनां विरलविरलेऽपि प्रचारे तासां मूलतोऽभावं वक्तुं न कोऽपि विपश्चित् शक्नोति। सिद्धान्ततः सत्यरूपा एवैताः सिद्धयः। व्यवहारतः प्रयोजकहेतूनां वैपरीत्यादेव तासां वैरल्यमुद्भावयामः। कालस्य माहात्म्यात्, तामसभावानां जायमानायां भूयस्यामभिवृद्धौ, सत्त्वप्रधानानां गुणानां च समुपचीयमाने चेतःकदर्थनपरे ह्रासे, सिद्धीनां फलाभिव्यञ्जनं विरलविरलतां प्रयातमिति सर्वथैव विदांकुर्वन्ति सचेतसो रहस्यविदः। सिद्धीनां सद्यः पूर्णफलाभिव्यञ्जनाय साधकानां सात्त्विकं जीवनं सदाचारं च अनिवार्यत्वेन अभिवाञ्छन्ति शास्त्रमर्मज्ञाः, परन्तु अधुना किं विश्वतो विलोकयामः। परान्नभोजनेन दग्धोदराणाम्, परापवादेन दग्धजिह्वानाम्, प्रतिग्रहेण च दग्धहस्तानां जनानां मन्त्रादिसिद्धयः कथंकारं स्वाभिमतं साफल्यं भजेयुरिति स्वयमेव उन्नेतुं पारयन्ति शास्त्रहृदयवेत्तारो भवादृशा विद्वांसः। सत्यप्येतादृशि दुरवस्थाग्रस्ते समये न किमपि नैराश्यं भजन्तु तज्ज्ञाः; प्रतिकूलोऽपि समयः स्वोच्चाभिलाषसम्पादनेन साफल्यं नेतव्यः। यदि जना विहाय आलस्यम्, दूरीकृत्य च सिद्धीनां साफल्यविषये सन्देहजालम्, स्वीयं जीवनं सात्त्विकभावापादनेन विशुद्धसदाचारपोषणे बद्धपरिकरा भवेयुः, तर्हि सिद्धीनां फलं प्रत्यक्षायमाणमेव भवेदिति नास्ति लेशोऽपि सन्देहस्य।

अस्यां पुराणगोष्ठ्यां नानाप्रान्तेभ्य उररीकृत्यापि क्लेशजातं समागतान् विद्वज्जनान् स्वल्पैरेभिः स्वागतशब्दैः सभाजयन्तो वयं कमपि प्रमोदनिवहमावहामः। प्रार्थयामहे च भगवन्तं काशीपतिं विश्वनाथं यदत्र समवेतानां विमलमतीनां विदुषां विमर्शपरम्परा सिद्धिविषये संदिहानचेतसां जनानां हृदयतः सन्देहराशिं विधूय कामपि कृतकृत्यतामाप्नुयादिति।

अन्ते पुनरहं विश्वविद्यालयस्य आत्मनश्च पक्षेण तत्रभवतां भवतां समेषां महानुभावानां स्वागतं व्याहरन् विश्वासमिममावहामि यद् भवन्तः स्वीयसत्कारेऽ-

स्माकं बाह्यत्रुटीनां विचारमकृत्वा अस्माकं भवत्सम्माननाया हार्दिकमभिप्रायं बहु मन्यमानाः सम्मेलनप्रसङ्गेन वाराणस्या भागीरथ्या विश्वनाथान्नपूर्णयोः दर्शनावसरस्य, आत्मनो विचारविनिमयं सम्पाद्य सिद्धीनां समाराधनायां जनरुचेर्जागरणजननपुण्यस्य च लाभेन सन्तुष्टमानसा भवेयुरिति—

कृत्स्नां संकीर्णतां भित्त्वा सर्वेषामेव देहिनाम् ।
भुक्तिमुक्तिविधानार्थं सिद्धिविद्या विजृम्भताम् ॥



# परिषदुद्देश्यपरिचयः

श्रीबलदेव उपाध्यायः, अनुसन्धानसंचालकः, वा० सं० वि० वि०, वाराणसी ।

शश्वत्स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीला-
रासाय ते नम इदं चकृमेश्वराय ॥
सज्जनाम्भोरुहयुषे वेदव्यासाभिधाजुषे
तमस्तोममुषे तस्मै परस्मै ज्योतिषे नमः ॥
अचतुरवदनो ब्रह्मा द्विबाहुरपरो हरिः ।
अभाललोचनः शम्भुर्भगवान् बादरायणः ॥

अयि मान्याः कुलपतयः, प्रतिकुलपतयः, उपकुलपतयः, पुराणगोष्ठीगरिष्ठा वरिष्ठाः पण्डिताश्च !

अत्रभवतां भवतां पुरतः पुराणगोष्ठीपरिचयमुपस्थापयतो मम किमपि भृशं प्रसीदत्यन्तरात्मा । पुराणगोष्ठीयं किमुद्देश्यमूला किंप्रयोजनफला किंसाधनसमन्विता चेति स्वल्पाक्षरैरेभिरभिरूपभूयिष्ठाया अस्याः परिषदः सन्निधौ किमपि प्रतिपादयामो वयम् ।

भारतीयायाः संस्कृतेर्धर्मस्य च विकाशे वेदार्थोपबृंहणमण्डितानां पुराणानां किमपि जागर्ति महनीयं वैशिष्ट्यम् । अस्माकं धर्मस्याचारस्यानुष्ठानादिकस्य च सकलस्य प्रपञ्चजातस्य आधारभूतो वेद एवेति नात्र किमपि बहुतरं चोदनीयं नाम, परन्तु सम्प्रति वेदशब्दस्य दुष्पारत्वाद् दुरधिगमार्थत्वाच्च तदर्थनिर्णायकानां मुनीनामपि परस्परविरोधाद् वेदरूपो वेदार्थनिर्णायकश्चेतिहासपुराणात्मकः शब्द एव विचारणीय इति तत्त्वसन्दर्भे पुराणस्य माहात्म्यं प्रतिपादयन् श्रीजीवगोस्वामी आधुनिकानां मानवानां कृते पुराणस्य सातिशयीमुपकारततिमाविष्करोति । प्रतिपादनरीतेः सारल्यादाख्यानानां च रोचकत्वाद् भाषायाश्च सुबोधत्वाद् वेदार्थादपि पुराणार्थस्य कमप्युत्कर्षमामनन्ति विद्वज्जनाः । अत्र नारदीयपुराणस्य वचनमिदमवधेयम्—

वेदार्थादधिकं मन्ये पुराणार्थं वरानने ।
वेदाः प्रतिष्ठिताः सर्वे पुराणे नात्र संशयः ॥
( नारदीय० २।९४।१७ )

यन्न दृष्टं हि वेदेषु न दृष्टं स्मृतिषु च द्विजाः ।
उभयोर्यन्न दृष्टं हि तत् पुराणैः प्रगीयते ॥

इति प्रभासखण्डीयं वचनं वेदागोचरार्थस्य स्मृतिगोचरातीतार्थस्य च प्रकाशनात् पुराणानां पूर्वोक्तनारदीयवचनस्य भाष्यभूतमाकलनीयं विद्वज्जनैः । अन्यच्च पुराणशब्दः स्वीयव्युत्पत्त्यापि कमपि महिमानमभिधत्ते । पूरणात् पुराणमिति पृधातोर्नैरुक्तपद्धत्या निष्पन्नोऽयं शब्दः स्वं वेदार्थपूरकत्वाद् वेदतुल्यतामाविर्भावयति । यतो हि किमपि वस्तु तुल्येनैव वस्तुना पूर्यते, नहि सुवर्णाभरणं जतुना पूर्यते । न वा कीटदष्टं कौशेयवस्त्रं कार्पासतन्तुभिः पूर्यते, मूलवस्तुपूरकवस्तुनोः समानजातीयत्वाद्धेतोः । इत्थं च वेदार्थपूरकाणि वेदार्थोपबृंहकाणि च पुराणानि भारतीयानां कृते आत्मनः श्रुत्या समानतां धारयन्तीति नापरोक्षं प्रेक्षावताम् ।

पञ्च लक्षणानि दश लक्षणानि वा पुराणानि सर्ग-प्रतिसर्ग-मन्वन्तर-वंश-वंशानुचरितादीन् विषयान् मुख्यतः प्रतिपाद्य लोकोपकारकं निखिलं ज्ञानविज्ञानजातं प्राणिनामैहिकामुष्मिककल्याणसाधनपरं व्यावहारिकाध्यात्मिकसमुन्नतिफलाय विवृण्वन्तीति विषये न किमपि नवीनं तथ्यमुपस्थापनीयं भवति प्रमाणैः । समेषां विषयाणां वैशद्येनोपस्थापयितुमशक्यत्वात् संस्कृतविश्वविद्यालयीयकुलपति-महामहिमराज्यपाल-श्रीविश्वनाथदासमहाभागानामनुरोधातिरेकात् पुराणोल्लिखितसिद्धीनामामूलविमर्शनाय सिद्धिविषयमेव प्राधान्येन पुराणगोष्ठीयमुपन्यस्यति । अलौकिकसिद्धीनां विवरणं पुराणेषु बहुशो विलोक्य 'पुराणं कल्पनाप्रसूतः काल्पनिको ग्रन्थः' इति संदिह्यते जनैः । पण्डितानामपि बहूनां मनीषा नैतस्मिन् मतेऽविसंवदति । अत एव विश्वेषां मानवानां हृदि विश्वासदार्ढ्योपसम्पत्तये महनीयो माननीयश्चायं विषयो भवादृशां पुराणगोष्ठीगरिष्ठानां वरिष्ठपण्डितानां पुरतोऽनुशीलनाय विमर्शनाय च परिषद्यस्यां समुपस्थाप्यते । प्राचीने युगे सिद्धीनां स्वरूपं कीदृगासीत् ? तासामुपलब्धौ का चासीत् प्रक्रिया ? वर्तमाने काले एतज्जातीयकाः सिद्धयः समुपलभ्यन्ते न वा ? यदि समुपलभ्यन्ते तर्हि कस्तासां प्रयोजकहेतुः ? कथं च तासां वैज्ञानिकरीत्या

जनैर्ज्ञानं समुपलब्धुं पार्येतेत्यादयः प्रश्नाः श्रीमतामलौकिकशेमुषीजुषां विचारणाय समाधानाय च प्रस्तुता विद्यन्ते। तत्रभवन्तो नानाप्रान्तेभ्योऽत्र समवेता विद्वद्धौरेयाः स्वविमलया धिया विचारयन्तु प्रश्नानिमान्, विचार्य च किमपि परिनिष्ठितं तथ्यमाविष्कुर्वन्तु येन साम्प्रतं हिंसा-विद्रोह-वैमनस्य-संघर्षादिभिः कलुषीकृते जगति मानवानां व्यावहारिकं जीवनं समुन्नतिमादध्याद् आध्यात्मिकं च जीवनं पुण्यपुञ्जोपचयमावहेत्।

पुराणानामनुशीलनेन सिद्धेः स्वरूपम्, सिद्धेः प्रकारान्, सिद्धेः प्रयोजनानि चानायासेन सम्यग् ज्ञातुं प्रभवन्ति पुराणमर्मविदः सज्जनाः। योगदर्शने प्रतिपादिताभिः सिद्धिभिः साकं पुराणस्थाः सिद्धयो न विपुलतरं पार्थक्यं भजन्ते समानरूपत्वात् तद्धेतूनां समानरूपत्वाच्च यमनियमासनादीनां षडङ्गानाम्; तथापि बहुषु स्थलेषु किमपि विचारोत्तेजनपरं पार्थक्यं नूनमुपलभामहे। तथा च स्कन्द-पुराणस्थमहेश्वरखण्डस्योपखण्डभूते कुमारिकाखण्डे पञ्चाधिकपञ्चाशत्तमेऽध्याये सिद्धीनां चतुषष्टिप्रकारानभिनवान् विलोकयामः। प्रथमतः सिद्धीनामष्टप्रकाराः— ऐशानी-राक्षसी-याक्षी-गान्धर्वी-ऐन्द्री-सौम्या-प्राजापत्या-ब्राह्मी-भेदाद् भवन्ति। एताः क्रमशः पञ्चभूतानि मनोऽहङ्कारं बुद्धितत्त्वं चाश्रित्य वर्तन्ते। ततः सर्वा अप्येताः प्रत्येकमष्टविधाः समुल्लसन्ति। एतासां चतुष्षष्टिसिद्धीनां विशिष्टान्यभिधानानि तस्मिन्नध्याये विस्तरश उपलभ्यन्ते।

अणिमा महिमा चैव गरिमा लघिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः॥

इति बहुशश्चर्चितानां सिद्धीनां विवरणं तूपलभ्यत एवानेकेषु स्थलेषु, परन्तु यत्र कुत्रापि एताभ्योऽप्यधिकाः सिद्धयो निर्दिष्टा विद्यन्ते। तथा च श्रीमद्भागवतस्य एकादशस्कन्धे पञ्चदशाध्यायेऽष्टादशसिद्धीनां सम्यग् वर्णनमुपलभामहे। धारणयैव सिद्धयः समुपजन्यन्ते। तत्र का धारणा कस्याः सिद्धेर्जननीति विषये श्रीमद्भागवतं बहुतरं स्पष्टतः प्रतिपादयत्यस्मिन्नध्याये। इदं तु निपुणं निभालनीयं विद्वद्वर्यैर्यज्जितेन्द्रियस्यापि युक्तस्यापि तत्रेशानी सिद्धिः पार्थिवी भण्यते, पृथ्वीतत्त्वेन सम्बद्धाद्धेतोः। एवं राक्षसी आप्या, याक्षी तैजसी, गान्धर्वी वायवी, ऐन्द्री व्योमात्मिका, सौम्या मानसी, प्राजापत्या अहम्भवा, ब्राह्मी मतिजा इति अपरा-प्रकृति-

सम्बद्धा अष्टविधाः सिद्धयः। जितश्वासस्यापि योगिनो भगवद्धारणां विना सिद्धयो नैवोपतिष्ठन्ति—

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः॥
( भाग० ११।१५।१ )

अलौकिकशक्तिसम्पन्ने भगवति तद्विभूतिषु वा चेतोधारणाया ऋते सिद्धीनामुद्भवः कथमपि नैव संभवति। भगवति चेतोधारणमेव सिद्धीनां बीजम्। तत्र काव्यव्यूहसिद्धिर्भागवतस्य रासलीलाप्रसङ्गे द्वारकालीलाप्रसङ्गे च भागवते विशिष्य निर्दिष्टा। ब्रह्मपुराणमपि ( अ० २३८।२६ ) एनां सिद्धिमुल्लिखति—

आत्मानं च सहस्राणि बहूनि द्विजसत्तमाः।
योगं कुर्याद् बलं प्राप्य तैश्च सर्वैर्महीं चरेत्॥ इति।

महाभारतस्य आश्वमेधिके पर्वणि १९।२५ व्याख्यायां नीलकण्ठोऽप्यस्याः स्वरूपं विविच्य वर्णयतीति तत एवोन्नेयम्। जातिस्मरविषये मार्कण्डेयपुराणं ( १०।४२ ) कथयति—

ज्ञानदानफलं ह्येतद् यज्जातिस्मरणं मम।
न ह्येतत् प्राप्यते तात! त्रयीधर्माश्रितैर्नरः॥

कूर्मेऽप्येवमेव प्रतिपादितं पूर्वार्धे १।४६ पद्ये।

अस्मिन्नेव प्रसङ्गे पुराणनिर्दिष्टानां सिद्धिफलानां बह्वीनां विद्यानामपि समुल्लेखो बहुशो निर्वर्ण्यमान आधुनिकानां चेतसि नूनं कामपि चमत्कृतिततिं विधत्ते। अधोनिर्दिश्यन्ते विद्वज्जनानां विनोदाय—

(१) अनुलेपनविद्या ( मार्क० ६१।२–८ ) विशिष्टेन अनुलेपनेन लिप्तपादः पुरुषो योजनानां शतमपि लङ्घयितुं शशाक।

(२) स्वेच्छारूपधारिणी विद्या—मार्क० द्वितीयाध्याये, स्कन्दस्य ब्रह्मखण्डे (७।१५-२७), पद्मपुराणस्य सृष्टिखण्डे राज्ञो धर्ममूर्तेः स्तुतिसन्दर्भे निर्दिष्टा।

(३) सर्वभूतरुतज्ञानम्—मात्स्ये हरिवंशस्य प्रथमखण्डे २३।२२ पद्ये स्वारोचिषमनुः 'सर्वसत्त्वरुतज्ञः' इति विशेषेण लक्षितो वर्तते। मत्स्यपुराणे ( २०।२५ ) राजा ब्रह्मदत्तोऽस्या विद्यायाः प्रभावेण पिपीलिकायुग्मस्य मनोरञ्जकं प्रेमालापं

श्रुत्वा स्वमहिषीमनोरञ्जनं व्यधत्तेति। एषा कथा पद्मपुराणस्य सृष्टिखण्डे (१०।८५) तैरेव शब्दैर्निर्दिष्टा।

(४) उल्लापनविधानविद्या—यया वक्रमपि वस्तु सारल्यमुपनीयते (विष्णुपुराणे ५।२०-९ शौरिरुल्लापनविधानवित्) अनयैव विद्यया श्रीकृष्णः कुब्जायाः शरीरमापादमस्तकं सरलं व्यधत्त।

(५) देवहूतिविद्या—यया देवाः प्रत्यक्षमाहूयन्ते स्म। दुर्वाससा कुन्त्यै प्रदत्तेयं विद्या सूर्यादीनां देवानां प्रत्यक्षीकरणे कारणभूतासीदिति महाभारतस्य आदिपर्वणि भागवतस्य नवमस्कन्धे च (भाग० ९।२२।२१) बहुशो निर्दिष्टम्। नाना सिद्धि-फला ह्रीमा विद्या तत्र पद्मिनीविद्या, रक्षोघ्नविद्या, जालन्धरीविद्या, पराबालाविद्या पुरुषप्रमोहिनीविद्या, युवकरणविद्या, वभ्रवाहनिकाविद्या, मोहिनीविद्या, जृम्भणी-विद्या इत्यादयः पुराणेषु बहुशो निर्दिष्टा वर्णिता अग्निपुराणे प्राधान्येनोपलभ्यन्ते।

इदमत्रानुसन्धेयं सुधीभिः—तपसैव सिद्धयो जायन्ते। तपोमूला हि सिद्धयः। तपसः प्रभावं वेदपुराणानि बहुधाऽभिव्यञ्जयन्ति। "तपसा वै लोकं जयति (श० ब्रा० ३।४।४।२७) इति शातपथी श्रुतिः, "तपसैव विश्वामित्रेण अगाधा नद्यो गाधाः कृताः" इति ऋग्वेदीयं मन्त्रं विवृण्वन् यास्को वदति (निरुक्त २।२४।६)। "तपसैव सङ्कल्पसिद्धिः, नातपस्विनो योगः सिध्यति" इति सिद्धान्तयति व्यासः स्वव्यासभाष्ये (व्या० भा० ४।१; २।१)।

यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम्।
सर्वं तत् तपसा साध्यं तपो हि दुरतिक्रमम्॥
(११।२३८)।

इति भगवान् मनुः स्वस्मृतौ दाढर्येन स्वीयं राद्धान्तं प्रकटयति।

अतोऽधुना तपसोऽभावे कथं सिद्धीनां प्रादुर्भावो भवत्विति स्वयमेव विचार-यन्तु विद्वज्जनाः।

भगवच्चरणारविन्दाराधनपराणां साधकानां कृते सिद्धयः सांसारिकलाभ-जुषोऽपि विघ्नरूपत्वेन हेया एवेत्याध्यात्मिकनये मान्यः सिद्धान्तः। तथ्यमेवेद-मभिधीयते श्रीमद्भागवतेन—

दैवेन ते हतधियो भवतः प्रसङ्गात्
सर्वाशुभोपशमनाद् विमुखेन्द्रिया ये।
कुर्वन्ति कामसुखलेशलवाय दीना
लोभाभिभूतमनसोऽकुशलानि शश्वत्॥
(भाग० ३।९।७)

इत्थं पुराणेषु सङ्केतितानां चर्चितानां च सिद्धीनां स्वरूप-प्रकार-फलनिर्देशाय भवन्तः स्वविमलया मनीषया विमर्शं विदधतु, तद्विषये च जायमानामज्ञानततिं स्वावबोधप्रकाशेन विधुन्वन्तु येन सन्दिहानानां चेतसः सन्देहापसरणं जायेतेति हेतोरेवेयं पुराणगोष्ठी समायोजिता संस्कृतविश्वविद्यालयेन प्रख्यातसंस्कृतविद्याप्रतिष्ठानेनैतेन अस्यां विद्वज्जनमण्डितायां वाराणस्याम्। मयोपस्थापितोऽयं परिषदुद्देश्यपरिचयो नाटकीयस्य वस्तुनः प्रसङ्गायेव भवद्‌गिरामवसरप्रदानाय पूर्वरङ्गायतामित्युक्त्वा विरम्यते॥

# पुराणेषु वैज्ञानिकसिद्धयः

म० म० श्रीमथुराप्रसाददीक्षितः, सम्मानितप्राध्यापकः, वा० सं० वि० वि०, वाराणसी ।

व्यासं वशिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥

अनेनैकेनैव श्लोकेन व्यासस्योत्पत्तिस्तद्वंशेतिहासश्च प्रदर्शितः, परन्तु व्यासस्य कथं वशिष्ठनप्तृत्वमिति विचारणीयम् । पुरा अमोघवीर्या ऋषयो भवन्तीति वेदविहित-कृत्येन दर्शयिष्यामि । महाभारते इदमुक्तम्—केनापि कस्मैचिद् (कस्याञ्चिद्) नलिका-यां ट्यूबस्वरूपायां वीर्यं निधाय कपोतद्वारा प्रेषितम् । गच्छतः कपोतस्य मुखे नलिकामवलोक्यापरः कपोतः किमपि भक्ष्यमिति ज्ञात्वा हठाद् ग्रहीतुमियेष । जाते परस्परं कलहे सा नलिका समुद्रे निपतिता, सा च मत्स्या भक्षिता । ततो योजन-गन्धा उत्पन्ना । मत्सीतस्तस्याः समुत्पत्तावपि वीर्यं कस्येति विचारणायां वशिष्ठस्येति निश्चयः, अत एव योजनगन्धातो व्यासस्योत्पत्तौ वशिष्ठनप्तृत्वं सूपपद्यते । योजनगन्धा च नलिकास्थितवीर्यस्य मत्स्या भक्षणाद् मत्स्या गर्भतः समुत्पन्नेति स्थितावपि वीर्यं तु वशिष्ठस्येति योजनगन्धा वशिष्ठकन्या तत्पुत्रो व्यासो वशिष्ठनप्तेति । अत्र विचार-णीयमेतत्—महाभारतकाले कां कोटिमापन्नमासीद् विज्ञानम् । अस्मिन् समये कृत्रिम-गर्भाधानं प्रसिद्धप्रक्रिययैवापरस्य वीर्येण विधीयते । तदा तु मुखेनाप्युदरे वीर्यस्य गमनाद् गर्भं भवति, तत्रापि विजातीयाया मत्स्याः । आश्चर्यकारि विज्ञानमासीत् । अधुना भवद्भिः किन्न साध्यत इति जिज्ञासायां तादृक्तपसोऽभावात्, तपसा किन्न साध्यते विश्वामित्र उदाहरणम् । प्रकृतमनुसरामः । अथैकदा स्नानार्थं मध्याह्ने गतः पराशरो रूपयौवनवतीं योजनगन्धामवलोक्य कामाकुलः सञ्जातः, नावि गत्वा तामि-... । सा चाब्रवीत्—लोकः पश्यति, स च तत्क्षणमेवान्धकारमजनयत्, पुनः साऽब्र-वीत्—मम शरीरे गाढं मत्स्यगन्धः, कथं त्वं प्रार्थयसे ? स क्रोशयुगाद् ग्राह्यसुगन्धा-... र्षीत्, पुनः साऽब्रवीत्—सति गर्भे लोकः पितरौ च किं कथयिष्यन्ति । आजननं ...पि न ज्ञास्यतीति स्वीकृतम् । पराशरोक्तं सर्वं तथैव जातम्, समुत्पन्नो व्यासः ।

अहो तद्विज्ञानम्, क्षणादन्धकारजननम्, गव्यूतेर्ग्राह्यसुगन्धमनजयत्। सर्वापि शक्तिस्तपसा साध्यते।

जृम्भकास्त्रस्यव विभिन्नः प्रकारोऽस्रुगैसप्रयोगः, तत्र प्रयोगसंहारविभिन्न-मन्त्रम्। पूर्वं जृम्भाश्चक्षुषोर्निमीलिकाः समुत्पद्यन्ते। संहारास्त्रेण त्वार्द्रेण सलवणेन परमाणूनां घर्षणेन तत्प्रभावो विनश्यति। अद्याप्यश्रुगैसप्रयोगे सलवणेनार्द्रेण वस्त्रेण प्रोञ्छनादस्रुगैसप्रभावो विनश्यति।

अदृश्येन मेघनाथेनायोधीति तु तदज्ञतामूलकमेव विजृम्भणम्। स तु वायुयानेन बहुतरमुपरि गत्वा पाषाणादिप्रक्षेपमकार्षीत्। रावणसविधे कियन्ति कति-विधानि वायुयानान्यभूवन्निति वाल्मीकिरामायणस्य सुन्दरकाण्ड एव द्रष्टव्यम्। निःशब्देनारण्ये पञ्चवट्यामप्युत्तरितुं शक्येन वायुयानेन सीतामहार्षीत्। मेघ-नादनुपरि स्थितं पाषाणादिवर्षन्तमवगत्यैकेनैव बाणेन रामो वायुयानं न्यपातयत्। इति कृत्वैव रावणो वायुयानेन नैव युयुधे।

गोश्चारणे गतो दिलीपो मायया धेन्वा परीक्षितः। सर्वमिदं कविकल्पितं वास्त-विकं वा? वास्तविकत्वेऽपि गोः कामधेन्वाः प्रभावाज्जातम्। वास्तविकमपीदम्—एक-देन्द्रः शिवस्योपरि वज्रं मुमुक्षन्नासीत्। स च दृष्टः शिवेन तथाभूत एवासीत्। इत्यादि-सिद्धयः योगीश्वरादिषु भवन्ति। तथा च सूत्रम्—स हि कर्तुमकर्तुमन्यथाकर्तुञ्च समर्थः। ऋते च चिच्छक्तेः। तस्याष्टौ सिद्धयो भवन्ति—१-अणिमा, २-महिमा, ३-लघिमा, ४-गरिमा, ५-प्राप्तिः, ६-प्राकाम्यम्, ७-ईशित्वम्, ८-वशित्वम्। शिवे एता अष्टौ सिद्धयः। वशीभूता विषधराः शिवस्योपरि पार्श्वे कटौ च तिष्ठन्ति। वशीत्वसिद्धेरेवायं प्रभावः। साध्यन्ते तपसा सर्वसिद्धयः। अवतारिणश्चतसृभिरेव सिद्धिभिर्युक्ता अव-गम्यन्ते। रामेण हनुमते चतस्र एव सिद्धयो दत्ताः परिज्ञायन्ते। अहिरावणेन देव्याः समक्षं रामलक्ष्मणयोरुपनीतौ हनुमताणिमालघिमाशक्तिभ्यां मशकरूपेण पुष्पा-भ्यन्तरे प्रविश्य गतम्। महिमाशक्तिश्च सुरसासमक्षमकारि। तद्यथा—"जस जस सुरसा बदन बढ़ावा। तासु दुगुन करि रूप दिखावा॥" पुनरणिमाशक्त्या मुखे प्रविश्य बहिरागत्य गन्तुमाज्ञां ययाचे। गरिमाशक्तिर्भीमसमक्षमर्जुनस्य ध्वजोपरि स्थितौ प्रकटिता। कृष्णेन शकटासुरो मारितः। तद्यथा—शकटासुरो वायुना कृष्णमुत्थाप्या-काशे गतवान्, तत्र गरिमासिद्ध्या भाराक्रान्तो विहितो निपतितश्च। उपरिस्थितस्य

कृष्णस्य भारेण मृतो बकासुरो यादवबालकैः सह कृष्णमपि न्यगात्, तत्र भगवता कृष्णेन महिमासिद्धिः प्रकटिता, ततश्च वायोर्निरोधात् स मृतः। आभिः सिद्धिभिः स्वविषयमेव कर्तुं प्रभवति। यथा—अणिमयाऽणुतामात्मनि विधातुं प्रभवति, न त्वतीन्द्रियं द्रष्टुं शक्नोति। अत एव हनुमता सर्वमपि रावणभवनमन्विष्टम्। हताक्षेनाशोकवाटिका निरीक्षिता। कथं नाशोकवाटिकामेवाद्राक्षीत्। किञ्च, सीता रावणेन हृतेति कथं रामो नाज्ञासीत्, इतस्ततश्चान्विष्यन् रुरोद। निश्चेतव्यमेतत्। अतश्चतसृणां सत्त्वेऽपि नातीन्द्रियज्ञानं भवति। महाभारतेऽपि तथैवास्ति। अर्जुनेन प्रतिज्ञाकारि—श्वः सूर्यस्य सत्त्वे दिन एवाभिमन्युसहायताकारकाणां भीमादीनां विजेतारं जयद्रथं हनिष्यामि, नो चेत् सूर्यास्तेऽहमग्निसाद् भवितास्मि। कथं कृष्णो जयद्रथसमक्षमेवार्जुनं नातिष्ठिपत्। चक्रप्रक्षेपादन्धकारो जात इति तु प्रवाद एव। विचारयन्तु—शपथप्रत्येयतामपहाय किमिदं चक्रं सूर्यं रुन्धत् तत्पुच्छभूतं तेन सहैवागच्छत्। कियता वेगेन सूर्यो गच्छति, चक्रं च कियता वेगेनागच्छत्। ढक्कावादनानन्तरं युद्धविरामः संजातः। अथ कियत्कालपर्यन्तं च सूर्यपुच्छभूतं चक्रं भवितुमर्हति। अपि च चक्रेऽङ्गुलिप्रक्षेपार्थं छिद्रं भवति, ततः स्फुटतरः प्रकाश आगमिष्यति। अन्यच्च चितानिर्माणार्थं काष्ठस्यावश्यकता भवति, तच्च विक्रयार्थं केनापि न सङ्गृहीतमितीतस्ततो विचिन्वन् सङ्गृहीतवान्। अथ सङ्गृहीतस्य काष्ठस्योपर्येव नातिष्ठत्, किन्तु तत्काष्ठेन चिता निर्मिता। पुनश्च सुभद्रां द्रौपदीं कुन्तीं भीमयुधिष्ठिरसात्यकिप्रभृतीन् पृथक् पृथक् सन्देशमवोचत्। तत्रापि चितायामग्निर्वस्त्रादिसाधनैर्ज्वालितः, सशरेण सधनुषा भवता चितायां स्थातव्यमिति कृष्णेनोक्तं तथैवार्जुनेन स्थितम्। दुःशासनस्य विशेषानुरोधेनागतो जयद्रथोऽर्जुनेन दृष्टो हतः, रात्रौ हत इति कृत्वा रात्रावेव युद्धं प्रावर्तत। तत्रापि चक्रप्रक्षेपः कृष्णमाययाऽन्धकारो मन्यते, न खलु वास्तविकेतिहासविचारे ईश्वरशक्तिः, ईश्वरमाया वा गण्यते। श्रीहनुमान् अणिमादिसम्पन्नो न वेगेनोदधिमुल्लङ्घितवान्। विचारणीयमेतत्—एकेन वेगेनोल्लङ्घमानो मैनाकेन नितान्तं प्रार्थितः, अग्रे निर्गतोऽपि परावृत्य चरणस्पर्शमकार्षीत्। विचारणीयमेतत्—अग्रे निर्गतः कथं परावर्तत। देवैः परीक्षार्थं प्रेषिता सुरसा कथं हनुमन्तं निराश्रये आकाशे रुरोध। कथं वेगेन गच्छन् महिमसिद्ध्या शरीरनिर्माणमकार्षीत्। कथं मुखे

प्रविश्य बहिरागत उत्प्लवनवेगो न शान्तः, स तु शाम्यत्येव वेग ईश्वरप्रभावात्, सर्वं सम्भवत्येवेति तु पूर्वं निराकृतमेव। न च वास्तविकेतिहासविचारे ईश्वरशक्तिराश्रीयते। ततश्च कथं गतवान्? इति विचारणायां संपातिना सर्वं बोधितं लङ्कायां सीता चास्ति, तेनैव वायुयानं दत्तम्। न च सर्वेतिवृत्तस्योल्लेखेऽपि वाल्मीकिनान्येन केनापि कथमिदं नोक्तम्? जाते रामराज्ये वायुयानस्यावश्यकतैव नावशिष्यते। अत एव न केनापि वायुयानवार्तोल्लेखि। रावणेन सीता पञ्चवटीतो निःशब्देन वायुयानेन वृक्षसमूहमध्यादानीता, तत्र तथाभूतं वायुयानमासीत्। अस्मिन् विषयेऽपि किमपि केनापि नालेखि। अथ वायुयानेन गतवान् नैतावता हनुमतो महत्त्वं हीयते। लङ्का दग्धा, सीतान्विष्टा, अक्षयकुमारो हतः। स आराममभूञ्जत्, रक्षांस्यपिषत्, अहिरावणमवधीत्, लक्ष्मणं संजीविनीमानीयाजीजिवत्। स्फुटं रामेणोक्तम्—

एकैकस्योपकारस्य प्राणान् दास्यामि ते कपे।
प्रत्यक्षं क्रियमाणस्य शेषस्य ऋणिनो वयम्॥ इति।

वायुयानेन सिन्धोर्लङ्घने न कामप्यनुपपत्तिं पश्यामः। महाभारतेऽपि बहुतरमन्यथा प्रकाश्यते जनतायाश्च प्रवादस्तथैव प्रसृतोऽस्ति। यथाभिमन्युः षड्भिर्बाणैर्हतः, परन्तु महाभारते नैवमस्ति। तत्र स्फुटमुक्तम्—अभिमन्युर्लक्ष्मणेन दुःशासनपुत्रेण गदायुद्धे हतः, गदायुद्धं तु द्वयोरेव भवतीति सर्वप्रसिद्धमेव। तत्रत्येयं स्थितिर्महाभारतेऽप्येवमेव वर्णिता। संशप्तका अर्जुनं योद्धुमाहूतवन्तः। गतवान् अर्जुनः। इतो द्रोणेन चक्रव्यूहो व्यरचि। यस्मिन् सप्त द्वाराणि। युधिष्ठिरं गृहीतुं स व्यूहः शनैः शनैः प्रससार। तं भेत्तुं भीमसात्यकिधृष्टद्युम्नादयः केऽपि समर्था नाभवन्। परमदुःखितं युधिष्ठिरमवलोक्याभिमन्युरुवाच—अहं षड् द्वाराणि भेत्स्यामि, कश्चित् सहायक आगच्छति न वेति नाहं प्रेक्षिष्ये। भीमादिभिः सबहुमानं साभिमानं चोक्तम्—वयं सर्वे छायानुलग्ना इव सहैव प्रवेक्ष्यामः। अथ प्रथमद्वारं विभिद्य प्रविष्टोऽभिमन्युः। भीमसात्यकिधृष्टद्युम्नादीन् सर्वान् एकाकी जयद्रथः पराजेष्ट। जयध्वनिमकार्षीच्च। अथ अभिमन्युः पञ्च द्वाराणि विभिद्य षष्ठद्वारि स्थितं कर्णं बहुभिः शरैर्बिभेद। बालोऽयं कथमेनं हन्यामिति सेनापतिं द्रोणमागत्य स्वमदर्शयदपृच्छच्च। किमहं कुर्याम्? बालोऽयम्। द्रोणोऽवदत्—नाहमर्जुनादस्मिन्नन्तरं पश्यामि। यदि शक्तस्तर्हि प्रत्यञ्चां छिन्द्याः। यथास्थानमागतः कर्णोऽन्तरमासाद्य प्रत्यञ्चामाच्छिनत्। अथ धनुः प्रक्षिप्या-

सिमादाय मध्यगतान् वीरांश्छिन्दन् द्रोणसम्मुखं दधाव। द्रोणः किं पलायताम्, उतान्यत् किमपि कुर्यात्। इति मुष्टिप्रदेशात्तस्यासिं चिच्छेद। न केनापि तस्योपरि एकोऽपि बाणः प्रक्षिप्तः, किन्त्वात्मरक्षार्थमेव प्रत्यञ्चा छिन्ना, त्सरुप्रदेशात् खड्गो द्रोणेन आत्मरक्षार्थमेव छिन्नः। यो हि द्रोणो निजतनयादधिकमर्जुनं मनुते, स तत्पुत्रं हन्यान्निपातयेद्वेति त्वप्रत्येय एव। अथाभिमन्युः त्सरुं प्रक्षिप्य गदां जग्राहेत्यालोक्य दौःशासनिरपि रथादुत्प्लुत्य गदामग्रहीत्। सर्वेऽपि तत्रस्था उभयोरप्युत्साहवर्धनार्थं यथास्थानमुभाभ्यां साधुवादं ददुः, किञ्चिदपि भेदं न मन्यन्ते स्म। अथोभावन्योन्यमेकदाऽन्तरमासाद्य गदां जघ्नतुः, गदाघातादुभौ निपतितौ मूर्छितौ च जातौ। अथ लक्ष्मणोऽश्रान्तत्वात् प्रथममुत्थितः, अभिमन्योरुत्थानं गदाग्रहणं च प्रत्यैक्षिष्ट। उत्थितोऽभिमन्युर्गदां गृहीत्वा युद्धाय प्रावर्तत, लक्ष्मणेन हतो निपतितो मृतश्च। विचारयन्तु विवेकिनो विद्वांसः—किमेकोऽपि बाणस्तस्योपरि द्रोणादिभिः क्षिप्तः? आत्मरक्षार्थं प्रत्यञ्चामसिं चाच्छैत्सीत्। स तौ नारक्षदिति तदज्ञतेत्यलमत्र बहूक्तेन।

रावणस्य दश शिरांसि नासन्, किन्त्वेकमेव शिरोऽस्ति, विज्ञानबलेन तेन तथाभूता माला निरमायि। यदीयगुलिकासु प्रतिबिम्बितं मुखं पङ्क्त्या मुखसमकक्षतया प्रतीयते। गुलिकासु मुखसमकक्षता नवस्वेव, खरावणयोर्युद्धे रामेण विभीषणं प्रत्युक्तम्—अहं तस्य शिरश्छिनद्मि। शिरश्छिन्दन् बाणस्तन्मध्यान्निर्गच्छति, परन्तु शिरोऽच्छिन्नमेव प्रतीयते। विभीषणेनोक्तम्—अस्य नाभिप्रदेशेऽमृतकुण्डम् अमृतकुण्डनाम तरलः, तत्र बाणप्रक्षेपादेकमेव मुखमवशिष्यते। अयमाशयः—तत्र हारस्य सूत्रच्छेदाद् गुलिका निपतिष्यन्ति, एकमेव मुखमवशिष्यते। एवं वास्तविकमवशिष्टं मुखं छित्वा व्यजेष्ट रामः। प्रकृतमनुसरामः—पुरा ऋषयोऽमोघवीर्या आसन्। अथैकदा ब्रह्मा यज्ञकर्तुकामोऽभवत्। तत्र यज्ञद्रष्टुकामा देव्यो रूपयौवनसम्पन्नाः समाजग्मुः। ता दृष्ट्वा ब्रह्मणो रेतः समपतत्। ब्रह्मा त्रिवारं तत् स्रुवेण गृहीत्वाऽग्नौ जुहाव। तथा च निरुक्ते—तृतीयेऽध्याये यथाऽर्चिषि भृगुः सम्बभूव, भृगुर्भृज्यमानो देहे, अङ्गारेष्वङ्गिराः। अत्रैव तृतीयमृच्छतेत्यूचु ऋषयस्तस्मादत्रिः। ब्रह्माण्डपुराणेऽप्येतद् दृश्यते। तत्रायमाशयः—वैवस्वते मन्वन्तरे सृष्टिकामस्य वारुणीं तनुं बिभ्रतो ब्रह्मणो वारुणे यज्ञे देवकन्या देवपत्न्यश्च यज्ञद्रष्टुकामाः समागताः। ताश्च दृष्ट्वा जुह्वतो ब्रह्मणो रेतो भुवि न्यपतत्, तच्च रेतो ब्रह्मा स्रुवेण गृहीत्वाग्नौ जुहाव।

अत्रान्तरे एव पूर्वं शिवशापात् स्वायम्भुवे मन्वन्तरे दग्धाः सप्तर्षयो जन्मग्रहणार्थं तत्र संप्राप्ता ब्रह्मणो रेतसा यज्ञकुण्डात् समुत्पन्ना अभूवन्। भृगुः प्रथमाहुत्या, अङ्गिरा द्वितीयाहुत्या। शेषं रेतः षड्धा कृत्वा ब्रह्मा पुनर्जुहाव। तेन मरीचिक्रत्वत्रिपुलस्त्यपुलहवसिष्ठा इति महर्षयो ब्रह्मपुत्राः समभवन्। ततश्च धर्मसरस्वती-लक्ष्मी-सावित्री-कामरति-प्रभृतीनामुत्पत्तिर्जाता।

कियदधिकं ब्रवीमि, ऋषीणाममोघवीर्यं भवतीति, भरद्वाजेन द्रोणे वीर्यस्थापनाद् द्रोणाचार्यः, कुम्भे वीर्यस्थापनादगस्त्यो नैतच्चर्मचक्षुभिरस्माभिरवगम्यते। प्रकृतिवादिनो वयम्। प्रकृतिविरुद्धं न मे बुद्धौ प्रतिभाति। अस्त्वेतत्। इदं तु मन्यत एव दुर्योधनः शतभ्रातृक आसीत्। प्रकृतिमात्रप्रेक्षणान्नैव बुद्धौ समेष्यति। तात्कालिक-विज्ञानस्य हृदयतः प्रेक्षणे सङ्गतमेव प्रतिभासिष्यते। तथाहि—एकदा नितान्तं खिन्ना गान्धारी व्यासमवदत्। महाराज ! न मे एकोऽपि पुत्र इति खिद्यते मे चेतः। अथ व्यासेनोक्तम्–स्नुषे ! खेदं जहीहि, शतं ते पुत्रा भविष्यन्ति, एका कन्या च। साधारण-लोकाः प्रकृतिविरुद्धमिति परस्परं परिहासं चक्रुः। भीष्मस्तु "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति" इत्यवश्यमेव शतं पुत्रा एका कन्या च भविष्यतीति निश्चिकाय। अथ जाते गर्भे नवमे मास्येकं मांसपिण्डमिवाजनयत्, तदवलोक्य गान्धारी रुरोद। भीष्मो व्यासमाह्वयत। व्यासस्तदवलोक्यैकस्मिन् कुण्डे तन्न्यधात्। उपरित औषधमिश्रितेन जलेनासिञ्चत्, अकथयच्च—यो यो ह्यस्मात् पिण्डात् पृथक स्यात् तं तमस्मिन् कुण्डे स्थापय इति, अपराण्येकाधिकानि शतं कुण्डानि स्थापितानीति दुर्योधनादयः शतं पुत्रा एका कन्या च जनिता। इदं विज्ञानं प्रकृतिविरुद्धमपि सर्वे युगपदेवोत्पन्नाः, व्यासेन जीविताश्च। महाभारतसमये ऋषयोऽमोघवीर्या आसन्। ब्रह्मणोऽमोघवीर्यत्वम्। वीर्यस्याग्नौ होमेऽपि पुत्रा जायन्ते स्म। ऋषीणां वाच्यर्थोऽनुधावति। किञ्च, योगी कर्तुमकर्तुमन्यथाकर्तुं च समर्थः, ऋते चिच्छक्तेः। परम्परागतं प्रामाणिकं प्रसिद्धं चैतत्। यदा बौद्धाः शङ्कराचार्येण सह शास्त्रार्थे पराजिताः, तदेत्यवदन्—वाचोयुक्तेर्न प्रामाण्यम्, तर्कस्याप्रतिष्ठानात्। इति सर्वज्ञा वयमतो दिव्येनादृष्टवस्तुना परीक्षा विधीयताम्। कः सर्वज्ञ इति निश्चयो भविष्यति, सर्वैर्बौद्धैरनुमोदितम्, यतो हि सर्वैर्बौद्धैरिदं ज्ञातमासीत्—बौद्धगुरोर्भगवती सिद्धेति स्थितं वक्ष्यति, विजेष्यते च। सुधन्वना राज्ञाऽपि स्वीकृतम्।

मन्त्री घटस्याभ्यन्तरे सर्पं वृश्चिकं च निधाय शरावेणाच्छाद्य सभायामस्थापयत्। बौद्धाचार्येण देवीं स्मृत्वा याचितम्—यदत्र तन्मे मनसि प्रतिभासतामिति, सर्पवृश्चिकौ च जगाद। शङ्कराचार्येण मनसाभिलषितमन्यथा कृतमथ सोवाच—अत्र हरिहराविति। मन्त्रिप्रभृतयो बौद्धं विजयिनं मत्वा प्रसन्ना बभूवुः। राजाज्ञया परावर्तिते घटे हरिहरयोः प्रतिमा निपतितेत्यन्यथा कर्तुं शक्तिरस्येति सर्वैरवगतमीश्वरः सर्वज्ञोऽयमिति शुभम्॥



# निर्माणकायविमर्शः

श्रीबलदेव उपाध्यायः, अनुसन्धानसंचालकः, वा० सं० वि० वि०, वाराणसी।

पुराणप्रतिपादितासु नानासिद्धिषु निर्माणकायसिद्धिरपि किमपि प्रामुख्यं भजते। 'निर्माणकाय' एव निर्माणचित्तमिति नाम्नापि व्यपदिश्यते। एतस्य स्वरूप-प्रयोजनादिकमनुरुध्य नानाशास्त्रोद्धृतप्रमाणानुसारेण संक्षेपत एव विमर्शः साम्प्रत-मुपन्यस्यते पण्डितानां पुरतः।

---

पञ्चशिखनामा प्रख्यातः सांख्याचार्यः परमर्षिकपिलद्वारासुरये सांख्यशास्त्र-स्योपदेशावसरे निर्माणचित्ताधिष्ठानमभिव्यनक्ति, एतस्मिन् सूत्रे—"आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति। योगदर्शनस्य व्यासभाष्य उद्धृतं वाक्यमेतद् वाचस्पतिविज्ञानभिक्षुप्रामाण्यतः पञ्चशिखाचार्यनिर्मितमेव सूत्रं मन्तव्यमिति विदङ्कुर्वन्ति विपश्चितः। कारुण्यादिति पदं नानातापसन्तप्तानां जीवानामुद्धारकामनयैव सिद्धपुरुषैर्भौतिकशरीरधारणस्या-वश्यकतामभिधत्ते। बौद्धदर्शनेऽप्ययमेव राद्धान्तः। महायानसम्प्रदाये समस्त-जीवानामभ्युद्धारार्थमेव तथागतेन निर्माणकायो बहुधा स्वीक्रियत इति नूनमामनन्ति तज्ज्ञाः। तथा चाचार्यवसुबन्धुराचार्यासङ्गस्य 'महायानसूत्रालङ्कार'ग्रन्थस्य व्याख्यायां सम्भोगकायाद् निर्माणकायस्य पार्थक्यं निर्दिशन् एनं परार्थसम्पत्तिलक्षणं समुल्लिखति। सम्भोगकायस्तु स्वार्थसम्पत्तिलक्षणो भवति, स्वप्रयोजनसाधनहेतुत्वाद् वैयक्तिककार्यसम्पादनाच्च। तद्वैपरीत्येन निर्माणकायस्तु परेषां जीवानां कल्याण-साधनत्वेन हेतुना परार्थसम्पत्तिलक्षणमितिपदेन विशिष्यते। कामं न्यायदर्शने निर्माणकायेति पदं नोपलभ्यते, परन्त्वीश्वरो जीवानां मङ्गलसाधनाय काले काले भौतिकविग्रहेणात्मानमावृत्य प्रकटीभवतीति सिद्धान्तो नापरोक्षो न्यायग्रन्थेषु। तथा चोदयनाचार्यः कुसुमाञ्जलिग्रन्थे नवनिर्मितजगतः सन्मार्गावलोकनायेश्वरः सृष्टिकाले गुरुरूपमादधानो भौतिकविग्रहं धारयति। स्वेच्छयैव कारणान्तरादृते मायावी वेति वदति—

समयोऽप्येकेनैव मायाविनेव व्युत्पाद्यव्युत्पादकभावावस्थितनानाकार्याधिष्ठानाद् व्यवहारतः सुकर एवेश्वरस्येयं शक्तिर्माया विभूतिशब्देन व्यपदिश्यते। पञ्चमस्तवके उदयन इदमपि वदति—यदेषा प्रक्रिया जगत आदौ सृष्टिकाल एव न भवति, अपि तु विग्रहस्यास्य धारणावश्यकतायां सञ्जातायां स विग्रहमिममन्यदापि धारयति स्वसामर्थ्यं चाभिव्यनक्ति—"गृह्णाति हि ईश्वरोऽपि कार्यवशाद् शरीरमन्तराऽन्तरा दर्शयति च विभूतिमिति"।

शाङ्करदर्शनेऽप्ययं सिद्धान्तो बहुशः साक्षात्क्रियते। अन्तस्तद्धर्मोपदेशाद् ( वेदान्तसूत्र १।१।२० ) इति सूत्रस्य भाष्ये 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः' इति श्रुतिवाक्यस्य ब्रह्मणि तात्पर्यं सङ्गमयन्नाचार्यः परमेश्वरस्येच्छावशाद् जीवानामनुग्रहार्थं लौकिकविग्रहधारणस्यौचित्यं प्रतिपादयन् स्वाभिप्रायमित्थं व्याचष्टे—स्यात् परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्। शङ्कराचार्यः स्ववाक्यप्रामाण्याय महाभारतीयं पद्यमेतदुद्धरति—

माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं मैवं मां ज्ञातुमर्हसि॥

श्लोकस्यायमभिप्रायः—नारदेन श्वेतद्वीपे भगवतो नारायणस्य यद्रूपं स्वलोचनाभ्यां साक्षात्कृतम्, तद्रूपस्य विषय एवेदं भगवद्वाक्यम्। नारदेन साक्षात्कृतो विग्रहो मायारूपमेव, न तु नारायणस्य तात्त्विकं स्वरूपमित्येतस्य तात्पर्यम्। फलतो निर्माणकाय एवायं शब्दान्तरेणात्र व्युपदिष्टः। मायाशब्दस्यात्र निर्माणमित्यर्थः।

अतोऽयं संशयलेशेनाप्यमृष्टः सिद्धान्तो यत् सांख्य-बौद्ध-नैयायिकानामिवाद्वतवेदान्तिनामपि नये जीवानामुद्धारकामनया तेषां परममङ्गलसाधनहेतुत्वेन गुरूणां गुरुतमः परमेश्वरोऽथवा तद्विभूतिमान् कश्चित् सिद्धः पुरुषः काले काले निर्माणकायमधितिष्ठति। परमेश्वरेण धर्मग्लानिपरिहाणाय सात्त्विकमार्गप्रवणानां साधूनां च संरक्षणाय बहुशो गृहीता अवतारा अपि निर्माणकायस्यैव प्रतिनिधिभूता वर्तन्त इति तथ्यमपि स्फुटमुन्नेतुं पारयामः। जीवानां कल्याणसम्पादनाय कारुण्यवशात् सिद्धः पुरुषः निर्माणकायं धारयतीति हेतोः कारुण्यमेव तद्धारणे मुख्यो हेतुः।

अथ निर्माणकायधारणस्येतराण्यपि प्रयोजनानि साम्प्रतं विचारयामः—

(१) श्रीमद्भागवतस्यानुशीलनेन ध्रुवं प्रतीयते यदलौकिकशक्तिसम्पन्नः साक्षान्मन्मथमन्मथः सौन्दर्यामृतरसमूर्तिर्भगवान् व्रजनन्दनः कृष्णो रासोत्सवे गोपीभिः साकं रन्तुमनाः स्वविग्रहस्य नानानिर्माणं चकार। यावत्यो गोपयोषितो रासोत्सवे समवेता बभूवुः, तावन्तमात्मानं विधायात्मारामोऽपि लीलया ताभी रेमे, स षडैश्वर्यशक्तिमण्डितो भगवानित्यर्थं प्रतिपादयति कृष्णमुनिः—

कृत्वा तावन्तमात्मानं यावतीर्गोपयोषितः।
रेमे स भगवान् ताभिरात्मारामोऽपि लीलया।

(भाग० १०।३३।२०)

अत्र लीलयेति पदं निर्माणकायमेव संकेतेनाभिधत्ते। अन्यच्च श्रीमद्भागवते दशमस्कन्धोत्तरार्धे नारदमुनिः श्रीकृष्णस्य गार्हस्थ्यचरिताभिलोकनेप्सया द्वारकायां पर्यटन् विभिन्नकार्यनिर्भरान् विरुद्धानुष्ठानपरायणान् नानाविग्रहान् विलोक्य कमपि विस्मयमाससादेति। भगवान् श्रीकृष्णः षोडशसहस्राणि युवतीनां युगपद् पृथक् पृथग् गृहेषूदावहदित्यर्थं प्रतिपादयत् तत्र भागवतपद्यमेतद्विषये स्मरणीयम्—

चित्रं बतैतदेकेन वपुषा युगपत् पृथक्।
गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहत्॥

(भाग० १०।६९।२)

कायव्यूहसम्पत्तिरेषा योगमायामहोदयानन्तवीर्यस्य श्रीकृष्णस्य लोकातीतचमत्कारविधायिनीति नूनं स्मरति व्यासदेवः—

इत्याचरन्तं सद्धर्मान् पावनान् गृहमेधिनाम्।
तमेव सर्वगेहेषु सन्तमेकं ददर्श ह॥ ४१॥
कृष्णस्यानन्तवीर्यस्य योगमायामहोदयम्।
मुहुर्दृष्ट्वा ऋषिरभूद्विस्मितो जातकौतुकः॥ ४२॥

(२) सौभरिर्मुनिः रमणेच्छया कायव्यूहं निष्पादयामास। स आत्मनः पञ्चाशतं कायान् निर्माय मान्धातृ राज्ञः पञ्चाशता कन्याभिः साकं समकालमेवारीरमदिति पौराणिकीं कथां वाचस्पतिमिश्रो भामत्यां (४।४।११ सूत्रस्य) निर्दिशति।

तत्त्ववैशारद्यां (४।५) वाचस्पतिमिश्रः पुराणस्थान् श्लोकानिमान् एतत्प्रसङ्गे समुद्धरति—

एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः।
भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्तु सः॥
तस्माच्च मनसो भेदा जायन्ते चैत एव हि।
एकधा च द्विधा चैव त्रिधा च बहुधा पुनः॥
योगीश्वरः शरीराणि करोति विकरोति च।
प्राप्नुयाद् विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्॥
संहरेच्च पुनस्तानि सूर्यो रश्मिगणानिव॥

(अन्तिमः श्लोको ब्रह्मपुराणे उपलभ्यते, अ० २३८।२७)

(३) योगिन आत्मज्ञानोपलब्ध्यनन्तरमवशिष्टानां प्राचीनकर्मणां भोगायानेकान् देहान् सृजन्ति, तद्द्वारा च सावशेषाणि कर्माण्युपभुज्य सद्यो निर्बन्धभावात् कैवल्यं प्राप्नुवन्ति। प्रयोजकचित्तेति नाम्ना व्यपदिश्यमानया मुख्ययेच्छया प्रभावितानां देहानां युगपत् सृष्टिरेषा कायव्यूहशब्देनोच्यते। तथ्यमिदं वात्स्यायनः स्वन्यायभाष्ये निर्दिशति—"योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयानुपलभते" (न्या० सू० ३।२।२०)।

अत्र विकरणधर्मा इति पदस्यार्थोऽस्मदादिकरणविलक्षणकरण इति तात्पर्यटीकायाम्। अद्भुतेन्द्रियसामर्थ्यवानिति सरलार्थः।

(४) शङ्कराचार्योऽपि—"विरोधः कर्मणीति चेद् नानेकप्रतिपत्तिदर्शनात्" (१।३।२७) इति ब्रह्मसूत्रस्य भाष्ये कथयति यद् योगिनामिव देवानामपि कायव्यूहसम्पत्तिफला सिद्धिर्विलोक्यते, यया युगपदेवानेकान् कायान् निर्माय त एकस्मिन्नेव समये नानायज्ञेषूपस्थातुं शक्नुवन्ति। एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः सम्भवति। स्मृतिरपि प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति। किमु वक्तव्यमाजानसिद्धानां देवानाम्। अनेकरूपप्रतिपत्तिसम्भवाच्चैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति।

अत्र स्मृतिवचनत्वेनोद्धृतौ श्लोकौ किञ्चित् पाठभेदेन ब्रह्मपुराणे ( अ० २६८। २६-२७ ) उपलभ्येते, तेन शङ्कराचार्यस्य पुराणैः सह साक्षात् परिचयं निषेधयन्तो जनाः स्वत एव पराभूता इति मन्तव्यम्। अन्यत्र च बहुषु स्थलेषु भाष्यस्य पुराणेभ्यः स्मृतिवचनसामान्यरूपेणानुदीरितनामान्यपि बहुशः पद्यान्युद्धृतानि विद्यन्ते।

( ५ ) इच्छामृत्युसिद्धयेऽपि योगिनः कायव्यूहमालम्बन्ते। कर्मणां फलोपभोगसमाप्तिमन्तरेण मृत्युर्नैव सम्भाव्यते। सावशेषफलानि कर्माणि स्वफलभुक्तये प्राणिनः प्रेरयन्ति, तदा योगिनामिच्छामृत्युः कथं सम्भवति ? प्रश्नस्यास्येदमेवोत्तरम्—योगी सावशेषाणां कर्मणां फलभुक्तये प्रारब्धानां कर्मणां च सद्यः फलनिर्वृतये बहून् कायान् निर्माय सहसा सर्वमवशिष्टं फलं झटिति भुक्त्वा स्वेच्छया म्रियत इति स्वेच्छामृत्युसाधनाय कायव्यूहसम्पत्तिर्नितान्तमौचित्यं भजते।

सोपक्रमं निरुपक्रमं च कर्म द्विविधं भवति। तत्संयमात्, अर्थात् तस्मिन् कर्मणि धर्माधर्मयोः संयमादपरान्तस्य ज्ञानं भवतीति प्रतिपादयति महर्षिः पतञ्जलिस्तद्विषयके स्वसूत्रे। तत्र च तत्त्ववैशारद्यां वाचस्पतिमिश्र इत्थमुद्घाटयति सूत्ररहस्यम्—"ततश्च योगी सोपक्रममात्मनः कर्म विज्ञाय बहून् कामान् निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते" इति।

निर्माणचित्तस्योत्पत्तिविषये किमपि विचारयामः। तद्विषये दार्शनिकानां मतैक्यं नोपलभ्यते। तत्र देवानां शरीरधारणप्रसङ्गे वाचस्पतिमिश्रो भामत्यामित्थमामनुते—देवानां शरीरं नहि प्राकृतजनवद् मातृपितृसंयोगाद् जायते, प्रत्युत परमेश्वरस्येच्छावशाद् महाभूतेभ्यः साक्षादेव सम्भवति। आजानसिद्धानां देवानां ज्ञानं न दैशिकेन, न वा कालिकेन व्यवधानेन विकृतिमाभजमानं विलोक्यते। देवा भूतजयिनो भवन्तीति हेतोर्वस्तुनिर्माणाय योग्यमुपादानं तेषां स्वातन्त्र्येच्छावशात् कार्योत्पत्त्यनुकूलं भवति। योगिनामपि विषय एषैव दशोररीक्रियते।

परन्तु योगशास्त्रे निर्माणचित्तस्योत्पादनविषये विभिन्नं मतं विलोक्यते—"निर्माणचित्तान्यस्मितामात्रात्" तथा "प्रवृत्तिभेदे प्रयोजकचित्तमेकमनेकेषाम्" ( यो० सू० ४।४, ४।५ ) इति सूत्रयोर्महर्षिः पतञ्जलिरित्थमाम्नाति—अस्मितामात्रादेव योगी एकतस्तु निर्माणचित्तानि यथेच्छमुत्पादयति, अपरतस्तु एकं प्रयोजकचित्तं निर्मिमीते यद् खल्वन्यानि सर्वाणि चित्तान्यधिष्ठाय स्वाभीप्सितकार्यं प्रति

तान्यनुकूलयति, अन्यथा तु निर्माणचित्तानां विभिन्नकार्येषु प्रसक्तानां स्वाभीष्टसिद्धिहानिः प्रसज्येत । तथा च शङ्कराचार्योऽपि "प्रदीपवदावेशस्तथाहि दर्शयति" ( ब्र० सू० ४।४।१५ ) इति सूत्रस्य भाष्ये स्वाभिप्रायमित्थं व्याचष्टे—"एकमनोऽनुवर्तीनि समनस्कान्यपराणि शरीराणि सत्यसङ्कल्पत्वात् स्रक्ष्यति, सृष्टेषु च तेषूपाधिभेदादात्मनोऽपि भेदेनाधिष्ठातृत्वं योक्ष्यते । एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया" इति । अयमभिप्रायः—योगी स्वेच्छयाऽनेकानि शरीराणि निर्मिमीते, तथा च तेषां प्रेरकभूतमेकं चित्तमप्याधत्ते, यदनेन हेतुना प्रयोजकचित्तमिति नाम्ना व्यपदिश्यते ।

निर्माणचित्तस्योत्पत्तौ विद्यमानान्येव परमाण्वादीन्युपादानरूपतां भजन्ते, उताहोऽविद्यमानानि नूतनानि साधनान्यपेक्ष्यन्ते ? नैयायिकादीनां मते तु विद्यमानचरेभ्योऽणुभ्यः प्राक्सिद्धायाः प्रकृत्या वा निर्माणचित्तस्योत्पादनप्रक्रियोररीक्रियते, वेदान्ते प्रत्यभिज्ञादर्शने तु नैषा व्यवस्था सम्मानमाधत्ते । तथा चाभिनवगुप्तपादानां मते योगी निर्माणकायस्योत्पादने प्राक्सृष्टान् परमाण्वादीन् पदार्थान् उपादानत्वेन नापेक्षते । तस्य स्वतन्त्रेच्छैव स्वविलासरूपेण भावानिमान् प्रकटयति । तथा चाभिनवगुप्तपादा ईश्वरप्रत्यभिज्ञाविमर्शिन्यामेवं वदन्ति—"योगसंविद एव तादृशी शक्तिर्यदाभासवैचित्र्यरूपमर्थजातं प्रकाशयतीति । तदस्ति सम्भवो यत् संविदेवाभ्युपगतस्वातन्त्र्या अप्रतीघातलक्षणादिच्छाविशेषवशात् संविदोऽनधिकात्मताया अनपायादन्तःस्थितमेव सद्भावजातमिदमित्येवं प्राणबुद्धिदेहादेर्वितीर्णक्रियामात्रसंविद्रूपाद् बाह्यत्वेनाभासयति" ( ईश्वरप्रत्यभिज्ञाविमर्शिनी १८४–१८५ ) इति । अयं निष्कर्षः—बाह्यदृष्ट्या निर्माणकायस्य वास्तविकत्वेऽपि तात्त्विकदृष्ट्या मायामयत्वमेव । योगिनः स्वेच्छावशात् किञ्चित्कालपर्यन्तं विशिष्टाभिप्रायधियैव निर्माणचित्तमाविर्भावयन्ति । तात्पर्यं बहुविधं विलोक्यते । क्वापि कारुण्यादुपदेशदानाय, धर्मपरिरक्षणाय, क्वचिच्चेच्छामृत्युसम्पादनाय । क्वचिच्च भौतिकाभिप्रायवशात् कायव्यूहं निर्माणकायं वा धारयति साक्षादीश्वरः, उताहो तस्यैव विभूतिवाग् महाजनः । तात्पर्यस्य पर्यवसाने, विशिष्टस्याभिप्रायस्य सिद्धौ चित्तमिदं स्वत एव तिरोधत्ते । अत एव निर्माणचित्तस्य मायिकं स्वरूपं सर्वथैवाभ्युपगन्तव्यम् । महाभारतस्य नारायणीयपर्वणि भगवतो नारायणस्य नारदं प्रति वचनम् । श्वेतद्वीपे नारदेन

साक्षात्कृतं भगवद्स्वरूपं पूर्णतया मायाजन्यत्वाद् मायिकमेवासीत्, न त्वन्यद्रूपमिव वास्तविकम्।

अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः।
निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः॥
एतत् त्वया न विज्ञेयं रूपवानिति दृश्यते।
इच्छन् मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः॥
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि॥

(नारायणीय० ३३९।४३–४५)

इत्थं निर्माणकायो योगिभिर्नानाप्रयोजनसिद्धये उपादीयते, विशेषतस्तु मानवानां तत्त्वोपदेशाय। तथागतो बुद्धोऽमुं निर्माणकायमधिष्ठाय स्वशिष्येभ्यो नानातत्त्वानामुपदेशजातं प्रददौ। सांख्यशास्त्रस्य प्रचारायादिविद्वान् परमर्षिः कपिलो निर्माणचित्तमेवाश्रित्यासुरये सांख्यानां तत्त्वं प्रोवाचेति पूर्वमेव निर्दिष्टम्। अतो योगशास्त्रे निर्माणकायस्य किमप्यतिशयितं माहात्म्यं स्वीक्रियते सिद्धैरिति दिक्। निर्माणकायेति शब्दस्य यथार्थतः प्रामाणिकोऽर्थो नीलकण्ठेन उल्लिखितोऽनुशासनपर्वणः (१८।७५) टीकायाम्—"निर्माणमनेकधा भवनम्, योगेन अनेकशरीरधारणम्" इति।

देवानां नैकविधत्वं वर्णयति महाभारतम्। तत्र 'निर्माणरत' इत्यप्यन्यतमः प्रकारो देवानाम्—

शुद्धाश्च निर्माणरताश्च देवाः
स्पर्शाशना दर्शपा आज्यपाश्च॥ १८।७५॥

# निर्माणचित्तम्

श्रीमदनन्तशास्त्री फडके, पुराणविभागाध्यक्षचरः, वा० सं० वि० वि०, वाराणसी ।

श्रीमद्भागवतादिपुराणेषु बहुत्र योगशास्त्रप्रोक्तानां सिद्धीनां नामतः कार्यरूपेण च वर्णनमुपलभ्यते । तत्र समाधिजसिद्धिषु निर्माणकार्यचित्तस्वरूपसिद्धेः समुदाहरणं श्रीयोगेश्वरकृष्णचरित्रे दृश्यते । यथा—

अथो मुहूर्त एकस्मिन् नानागारेषु ताः स्त्रियः ।
यथोपयेमे भगवाँस्तावद्रूपधरोऽव्ययः ॥

( भाग० १०।५९।४२ )

भौमासुरकारागारस्थिताः षोडशसहस्राधिकसङ्ख्याकाः कन्यका एकस्मिन् वैवाहिके मुहूर्तेऽनेकगृहेषु च तत्कन्यासङ्ख्यासमानसङ्ख्याकानि रूपाणि कृत्वोदुवाह । अत्र टीकाकाराः श्रीकृष्णस्य कृतेरुपपादनाय "निर्माणचित्तान्यस्मितामात्रात्" ( ४।४ ) इति योगसूत्रमलिखन् । तथा समुपपादनार्थमस्य सूत्रस्य सूत्रमन्यदेकं प्रदर्शयामासुः— "प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" (४।५) इति । एतद्विवरणात् पूर्वं योगशास्त्रदृष्ट्या (१) पदार्थस्वरूपम्, (२) चित्तसामर्थ्यम्, (३) निर्मलसमर्थचित्तस्य पदार्थानां रूपादिपरिवर्तनयोग्यता, (४) सांप्रतिकानां पाञ्चभौतिकपदार्थद्वारा चन्द्रादिमण्डलगन्तुकामानां सिद्धानां सामर्थ्यस्य मर्यादा, (५) प्राचीनभारतीयर्षिभिः स्वीकृतसाधनस्वरूपम्, (६) निर्माणकाय-चित्तादिनिर्मातुर्योगिनो भूमिका, (७) तत्प्राप्तौ तेन स्वीकृता उपायास्तथैतत्संबन्धि च किञ्चिदन्यदस्माभिः प्रतिपाद्यन्ते ।

(१) सृष्टिरर्थाज्जडचेतनपदार्थजातमनाद्यनन्तसर्वशक्तिसर्वकरणसमर्थस्य सर्वमूलभूतैकतत्त्वस्य प्रथमस्फुरणजसङ्कल्पादभवदिति तु प्रायः सर्वे दार्शनिका मन्यन्ते । तन्मूलभूततत्त्वं तस्य प्राथमिकस्फुरणजसङ्कल्पं स्वस्वदर्शनानुसारं दार्शनिका ईश्वर-ब्रह्म-शक्ति-पशुपति-काल-शून्य-विज्ञानादिनामभिः, तथा प्रथमस्फुरण-सङ्कल्प-प्रकृति-मायादिशब्दैश्च वर्णयन्ति । उपनिषच्च—"सत्यं ज्ञानमनन्तं ब्रह्म, एकोऽहं बहु स्याम्" इति रीत्या निरूपयति । तच्च सर्वादितत्त्वं चेतनम्, स्फुरणादितत्त्वं च जडम् । उभयोर्न्यूनाधिक-

संबन्धस्वरूपमिलनादनेकस्वरूपाकारगुणादिभिन्नं दृश्यमानं जगत्समजनि। एतदेव तस्य सर्वादितत्त्वस्य बहुभवनम्।

पदार्थयोर्विरुद्धयोः परस्परमिश्रणादुभयोः शुद्धस्वरूपं सामर्थ्यञ्च विघटत इति तु सर्वविदितमत्रापि सर्वादिमूलतत्त्वतो जाते जडचेतनरूपे जगति मूलसर्वादितत्त्व-सङ्कल्परूपमाया-प्रकृति-तत्त्वयोः सामर्थ्यं स्वरूपञ्च व्यघटत। अतः सर्वपदार्थेषु तत्त्वयो-रुभयोः सकाशात् प्रादुर्भूतानामनेकपदार्थानां परस्परं न्यूनाधिकभावेन मिश्रणादेकरूपत्वं समानसामर्थ्यादिकं च नोपलक्ष्यते। केचन मूलतत्त्वं न विक्रियते, केवलं प्रकृत्यु-पाधिना तथैवाभासत इति वर्णयन्ति। एतत्त्वन्यदास्ताम्, यस्मै यद् यथा रोचते तत्तथैव।

मूलभूतस्य सर्वादितत्त्वस्य प्राथमिकस्फुरणसङ्कल्पः परमशुद्धो मिश्रणजदोष-रहितः सर्वं कर्तुमनवरुद्धशक्तिरस्ति, परन्तु ततः प्रादुर्भूतस्य तत्प्रतिनिधिभूतस्य जीवस्य सङ्कल्पकचित्तमनेकवासनामलादिदोषयुक्तमल्पशक्ति विद्यते। ते दोषाश्चेतस आवरका यदि केनचिदुपायेन विनश्येयुस्तदा तज्जीवसङ्कल्पकचित्तं मूलसर्वादितत्त्वस्य सङ्कल्पशक्तिसमानशक्तिकं भवति। चेतसोऽनादिकालजातवासनामलादिदोषाणां दूरतोऽपसारक उपाय एव योगशास्त्रस्य प्रतिपाद्यो विषयः।

(२) योगशास्त्रं सृष्टं पदार्थजातं सत्यरूपं मनुते, न तु चित्तकल्पितं स्वप्नज्ञा-नादिवदसत्, न वा ज्ञानरूपमपि। उक्तञ्च पतञ्जलिना—

"वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः" ( ४।१५ ) इति।

वस्त्वेकत्वे कान्तादिरूपे पत्युः सुखज्ञानम्, सपत्नीनां दुःखानुभवः, परिव्राजः सामान्यबोध इति प्रमातॄणां ज्ञानस्य भेदाद् एकं वस्त्विति प्रतिसन्धानाच्च प्रमातैकं वस्तु दृष्ट्वा ततः स्वचित्तस्थसंस्कारानुरूपं सुखदुःखादिफलमनुभवति। अतश्चित्तवस्तुनोर्भेद-कोऽयं मार्गः। किञ्चैकस्यैव घटस्य बहुज्ञानालम्बनत्वं दृश्यते, तदा किं बहुभिश्चित्तैरेको घट उत्पादित इति वक्तुं शक्यते? अनेकचित्तोत्पादितवस्तुनोऽनेकत्वमावश्यकम्, परन्तु सर्वे प्रमातारः कथयन्ति—यं घटं त्वं पश्यसि तमेवाहमिति, स च एक इति। किञ्च, मूलतत्त्वं सत्यम्, तस्य सङ्कल्पः सत्यः, उभयनिर्मितं जगदपि सत्यमेवेति निर्णयः। श्रुत्योक्तम्—"पादोऽस्य सर्वा भूतानि" इति। किञ्च, पदार्थानां ज्ञानरूपत्वे बुभुक्षितचेता भक्ष्यादिपदार्थं सङ्कल्पयति, परन्तु सङ्कल्पानुसारं पदार्थं नाप्नोति।

ततो मरणासन्ने बुभुक्षितचेतसि परेणानीतं पदार्थमुपभुज्य कथञ्चिज्जीवति। अतश्चेतसो भिन्नः सत्यो वाह्यार्थोऽस्ति, स च क्षणिकः स्थिरो वेति विचारोऽन्यः। योगशास्त्ररीत्योभये पदार्थाः स्थिराः क्षणिकाश्च।

(३) जगन्मूलभूते सर्वादिभूते तत्त्वे यथा सत्यसङ्कल्पत्वं सर्वकर्तृत्वं च विद्यते। यतस्तदतिशुद्धं मलवासनादिदोषरहितमस्ति। तत्सङ्कल्पजजीवस्तथाविधोऽपि मलवासनादिदोषयुक्तचित्तो यावत्पर्यन्तं चेतसो दोषजातं नापाकरोति, तावत्तस्य सङ्कल्पे सर्वसर्जनशक्तिर्न प्रादुर्भवति। यथैको मूर्खः, एको विद्वान्। उत्पत्तिकाले द्वावपि ज्ञानरहितावेव। यो विद्वानभवत्, स पठनाभ्यासेन स्वहृदयस्थमज्ञानावरणं दूरमकरोत्, यश्च मूढस्तेन स्वहृदयस्थज्ञानावरणं न दूरं कृतम्। यश्च शङ्कराचार्यसदृशः पूर्वजन्माभ्यासेन विनाशितज्ञानावरणः, स जन्मत एव विज्ञानी दृश्यते। एतच्चान्य-दृष्टान्तेनापि स्पष्टं भवेत्। बीजेऽस्ति निहिताऽङ्कुरादिद्वारा महतोऽश्वत्थवृक्षस्योत्पादिका शक्तिः। यस्य बीजस्य भूमिजलादिसम्बन्धो भवति ततो वृक्षः समुत्पद्यते, कुसूलस्थ-बीजं च कुसूलेनावृतत्वाच्छक्तिसंपन्नमपि नोत्पादयत्यङ्कुरादिकम्। तथा परमेश्वर-प्रतिनिधिरूपो जीवोऽप्यावृतज्ञानसङ्कल्पशक्तित्वान्न परमेश्वरवत्किमपि कर्तुमीष्टे, तच्च मलादिदोषजालं मन्त्र-तपस्-औषधि-भक्ति-योगादिसाधनद्वारा यदा विनश्येत्तदा तथैव कर्तुं कल्पेत। तद्यदा दोषरहितं भवति, तदा पदार्थानां रूपादिपरिवर्तनं कर्तुं प्रभवति। साम्प्रतिकाः केचनाल्पसिद्धिशक्तिकाः 'मेस्मरिज्म-हिप्नाटिज्म' शब्दवोध्यशक्त्याऽऽश्च-र्योत्पादकं कार्यं संपादयन्तीति बहुभिर्दृष्टं स्यात्, तदपि सर्वं चेतसोऽल्पीयस्या शक्त्या। केचनेन्द्रजालविद्यानिपुणाः सम्प्रति युरोपादिदेशान् भ्रमन्तो मन्त्रादिद्वारा प्राप्तचेतश्शक्त्याऽल्पीयस्या सर्वेषामाश्चर्यकारकान् प्रयोगान् सम्पादयन्ति।

अन्यदेकं प्रसिद्धं प्रायः सर्वैर्दृष्टं कदाचिदनुभूतमपि स्यात्। पुच्छविषो वृश्चिकः स्वपुच्छसूच्या विषं शरीरे प्रवेशयति, तदा त्वग्निदाहतुल्या पीडा समुत्पद्यते। तच्च विषं छुरिकया विषप्रवेशस्थानं संविध्य ततः प्रवहता रुधिरेण सह विषस्य वहिर्निःसारणं किं वा विषपीडाशामकौषधं सूचीद्वारा शरीरे प्रवेशनीयम्। मन्त्रविद् योगी चान्यमुपायं करोति। कदाचिद्धस्तस्पर्शम्, कदाचित् फूत्कारम्, कदाचित् "भो तव वृश्चिकपीडा नष्टा, गच्छ गृहम्" इति सन्देशं दत्त्वा पीडात उन्मुक्तं करोति दुःखिनमिति प्रथितमेव। पाञ्चभौतिक-विषस्य नाशः पाञ्चभौतिकेनैवोपायेन कर्तुं शक्यते। मन्त्रविद् योगविच्च तथैव करोति,

न तु प्राकृतं नियममतिक्रामति। केवलं स्वसंपादितयाल्पीयस्या शक्त्या सिद्धं शब्दमुच्चार्याथवा सिद्धं सङ्कल्पं प्रबोध्य शब्दतन्मात्रात आकाशम्, ततः स्पर्शतन्मात्रातो वायुमनेन क्रमेण पार्थिवं विषनाशकमौषधं समुत्पाद्य विषसंस्पृष्टस्थाने प्रवेशयति, परन्तु सङ्कल्पस्यातिवेगशीलत्वात् क्षणमात्रेण सा क्रिया संपद्यते, परन्तु भवति प्राकृतनियममाश्रत्यैव। एवं पदार्थविपर्यासेऽपि। पदार्थविपर्यासे पातञ्जलशास्त्रविदाचार्याणां द्विविधमतमस्ति—केचन कथयन्ति सामर्थ्यसत्त्वेऽपि योगी पदार्थविपर्यासं न करोति, यतोऽनादिसिद्धमहायोगिपरमेश्वरस्य कृतौ हस्तक्षेप इव भवेत्, स च नोचितः। केचन कथयन्ति विभूतिबलेन यत्किञ्चिद् योगी संपादयति तज्जात्यन्तरपरिणामरूपं धर्मविकल्पसंघटनं वेति। आस्ताम्।

(४) योगशास्त्रमतेन पदार्था द्विप्रकारकाः सन्ति—शक्तिरूपाः शक्तरूपाश्च। परमेश्वरसङ्कल्पादारभ्य पञ्चतन्मात्रं पदार्थजातं शक्तिरूपम्, पञ्चमहाभूतेभ्य आरभ्य संपूर्णपदार्थजातं शक्तरूपमर्थाच्छक्तियुक्तम्। शाक्तपदार्थेषु शक्तिर्गुणभूता, शक्तेराश्रयद्रव्यस्यैव प्राधान्यम्। शक्तिरूपतन्मात्रासु केवलमाश्रयगन्धः सर्वथा शक्तिरेव प्रधाना, तन्मात्रापूर्ववर्तिषु त्वाश्रयगन्धोऽपि नास्त्येव।

आधुनिका युरोपादिदेशस्थाः सिद्धाः पाञ्चभौतिकद्रव्यसाहाय्येन दूरदर्शनं दूरश्रवणादिकं समपादयन् आश्चर्यमुत्पादयन्ति च। सम्प्रति तु चन्द्रादिग्रहमण्डलानि गन्तुकामाः सन्ति, परन्तु तेषां सामर्थ्यस्य मर्यादास्ते। यत्र पाञ्चभौतिकपदार्थानां गतिस्तत्रैव तैः कार्यं कर्तुं पार्यते, परन्तु स्वशरीरेणाकाशगमनं स्वशरीरस्य लघु-अणु-महद्भवनादिकार्यं केवलं शक्त्यैव संपादनीयम्, तत्र ते न प्रभवन्तीति तेऽपि विदन्त्येव। चित्तं सर्वव्यापकं सर्वपदार्थकरणसमर्थं सर्वज्ञातृ चास्ति। तत्र चेतसि महाशक्तितत्त्वं मलादिवासनाभिर्लीनं विद्यते, तद्यदि केनाप्युपायेन प्राचीनभारतीयैः प्रोक्तशमदमादिसाधनजातेन प्रस्फुरितं भवेत्तदा तु नूतनं जगत्स्रष्टुं सामर्थ्यं मानवाधीनं भवेदिति। उक्तञ्च पतञ्जलिना—"सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याद् ज्ञेयमल्पम्" (४।३१)। सर्वैरावरणकैर्मलैर्यदा चित्तं (ज्ञानं चित्तं पर्यायः) रहितं भवति, तदा तदनन्तं सर्वप्रकाशं च भवति, तदग्रे ज्ञातव्यं वस्त्वप्यल्पं विद्यते। चित्तस्य व्यापकत्वं प्रकृत्या नियमितं मधुमक्षिकादिकीटकेषु दृश्यते। तेषु त्रिप्रकारा घटका अस्माकं हस्तपादादिवन्मधुकरराजमनुवर्तन्ते, न तेषां मनसः सर्वथा स्वतन्त्रकार्यकर्तृत्वम्। मधु-

मक्षिकाः स्वावासस्थानं परित्यज्य पुष्परसमानेतुं दूरं गच्छन्त्योऽपि सर्वथा मधुकरराजमनसः सम्बद्धाः सन्त्यस्तमेवोपकुर्वन्ति। मधुकरराजोऽन्यत्र यदि गन्तुमभिप्रति तदा ताः सर्वास्तेन सहान्यत्र गच्छन्ति। न तासां सर्वासां तृतीयः पुरुषार्थः कामः। आधुनिकैः कीटकशास्त्रविद्भिरत्र बहु समालोचितमस्ति।

(५) प्राचीनभारतीयर्षिभिर्योगशास्त्रविद्भिश्चित्तस्य निह्नुतं सामर्थ्यमुद्बोधयितुमावरणमलानां दूरमपसारयितुं यमनियमाद्यनेके उपाया महता विस्तरेण प्रदर्शिताः, तत्र योगाङ्गेष्वन्तिमं त्रयं धारणा-ध्यान-संप्रज्ञातसमाधिरूपं संयमपदवाच्यम्।

तस्य दृढाभ्यासेनानेकसिद्धीनामुदयो भवति, अन्तःकरणसामर्थ्यं मयादिसाधनैर्दोषनिवृत्तेर्लीनं यत्तत्प्रकाशते। तदा योगी स्वसङ्कल्पानुसारं संयमबलेनाकाशगमनं जलस्तम्भनपूर्वकं तत्र चलनं परकायप्रवेशादिकं सर्वं तत्र तत्र संयमाभ्यासेन कर्तुं शक्नोति। ईश्वरसङ्कल्पतुल्यस्तस्य सङ्कल्पोऽजायत। तपोमन्त्र-तन्त्र-समाधि-भक्तिजसामर्थ्यस्यात्रैकरूपत्वम्। तपोमन्त्रादीनां साधनानि तु भिन्नानि विद्यन्ते, परन्तु तेषां सर्वेषां साधनानां फलं तु चेतस आवरकमलनाशनं नाम।

इयमेव समाधिप्राप्तस्य योगिनो भूमिका, अस्यां स्थित्वा स स्वकीयेन निर्मलेनात एव परमेश्वरसङ्कल्पसदृशेन सर्वथा सर्वं कर्तुं समर्थेन चेतसा संयमद्वारेण निर्माणकायान् निर्माणचेतांसि चास्मितामात्रान्निर्मातुं प्रभवति, निर्माणचित्तानां प्रादुर्भावोऽहङ्काराद् भवतीति पतञ्जलिः प्रतिपादयति—"निर्माणचित्तान्यस्मितामात्रात्" (४।४) इति।

स्वसिद्ध्या निर्मितकायव्यूहान् सञ्चालयितुं तैरेकरूपकार्यं संपादयितुं च मनःकारणादहङ्काराद् योगी कायसमसंख्याकानि चित्तानि निर्मिमीते। तेषां प्रयोजनं चानेकदेशस्थानां भक्तानां समुद्धरणम्, यथा भगवता श्रीकृष्णेन कन्यकानां भौमासुरकारास्थितानां समुद्धरणं कृतम्। कदाचिदनेकदेशस्थविषयाणां सेवनम्। उक्तञ्च न्यायभाष्ये वात्स्यायनेन—"योगी खल्वृद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयान्युपलभते" इति। कदाचिच्छिष्यानुपदेष्टुम्, यथा कपिलेनासुरेरुपदेशार्थं निर्माणचित्तं गृहीतम्, उक्तञ्च पञ्चशिखाचार्येण—"आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति।

कदाचिद् योगी विरक्तः सन्—"नाभुक्तं क्षीयते कर्म जन्मकोटिशतैरपि" इति नियमं ज्ञात्वा सर्वकर्मफलभोगार्थं भिन्नान्यनेकशरीराणि निर्मिमीते। तेषामेकरूपकार्यकरणार्थं तत्संख्याकानि चित्तानि निर्माय स्वचित्तद्वारैकस्मिन्नेव जन्मनि सर्वकर्मभोगमुपभुज्य कैवल्यं प्राप्नोति। अत्र चित्तपदमिन्द्रियादीनामप्युपलक्षणम्। योगिशापेनापि शापग्रस्तस्य शरीरं विषपरिणतं भवति, यथा नहुषस्य। तत्र योगिसङ्कल्पेन सर्वत्र विद्यमानायाः प्रकृतेरवयवानां विभिन्नजातीयानां पूरणं भवति—"जात्यन्तरपरिणामः प्रकृत्यापूरात्" (४।२)।

बौद्धग्रन्थेष्वपि निर्माणदेहस्य निर्माणकायस्य च समुल्लेखो विद्यते—धर्मकाय-सम्भोगकायैः सह निर्माणकायस्यापि वर्णनं विद्यते। जैनशास्त्रे आचार्यदेहस्य वर्णनमपि निर्माणकायं सूचयति।

पुराणप्रोक्तस्य भक्तस्य योगि-तान्त्रिक-मान्त्रिक-तपस्व्यपेक्षया वैशिष्ट्यं विद्यते, स सर्वथा परमेश्वराश्रितः परमेश्वरसङ्कल्पेन सह स्वसङ्कल्पं संयोज्य सर्वत्र परमेश्वरं पश्यन् न कदाचित् पतति, योगिनस्तु बहुधा पतन्त्येव। उक्तञ्च पतञ्जलिना—"स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्" (३।५०)।

भक्तस्तु सर्वथा परमेश्वराश्रितः सन् न पतति। उक्तञ्च गीतायाम्—

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।
भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्॥

एतत्सर्वसंपादनार्थमष्टवर्षदेशीयानां संस्कृतबालकानां बुद्धिमतां नगराद् दूरं विशिष्टाश्रमे योग्यविरक्तनिर्लोभयोगविदध्यापकद्वारा शिक्षणम्। एतद्विषये विस्तरतो निवेदयिष्य इत्यलम्॥



# देहसिद्धिः

श्रीमुरलीधरमिश्रः, व्याकरणविभागाध्यक्षः, वा० सं० वि० वि०, वाराणसी ।

तत्र सिद्धिपदं द्विविधम्—यौगिकं रूढञ्च । यौगिकं सिद्धिपदं निष्पत्तिपर्यायम् । तथा च देहशब्देन षष्ठीसमासे देहस्य सिद्धिर्निष्पत्तिरित्येकोऽर्थः । रूढञ्च सिद्धिपदम्—"अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥" इति वचनप्रामाण्यादष्टविधम् । अपरापि सिद्धयो भवन्तीत्यग्रे दर्शयिष्यामः ।

देहशब्दोऽपि 'दिह् उपचये' एतस्माद्धातोर्निष्पन्नो दिह्यत उपचीयत इति देहः, कर्मणि घञ् । दिह्यन्त उपचीयन्ते वाऽवयवादयोऽस्मिन्नित्यधिकरणे वा । तत्र देहः शरीरमित्यनर्थान्तरम् । तत्र शरीरशब्दस्य शृधातोर्निष्पन्नत्वेन शीर्यत इति शरीरमित्येवंरीत्या विरुद्धार्थकत्वेऽपि फलत उपचयापचययोरेकत्र स्थितत्वादुभौ पर्यायाविति पर्यवसत्या व्यवहारः । तत्र शरीरं त्रिविधं भवति—कारणशरीरं सूक्ष्मशरीरं स्थूलशरीरञ्च । तत्र याऽविद्यात्मसु वर्तमाना सैव कारणशरीरम् । पञ्च बुद्धीन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणाः, मनो बुद्धिरेते सप्तदश मिलित्वा सूक्ष्मशरीरम् । ततस्तमोगुणप्रधानाभिः पञ्चतन्मात्राभिरुत्पन्नैः पञ्चमहाभूतैर्मिलित्वा स्थूलशरीरम् । तत्र पञ्चतन्मात्राभ्य एवापञ्चीकृताभ्य इन्द्रियाणां मनसां प्राणानां चोत्पत्तिः सत्त्वरजोगुणयोर्वैषम्येन तत्तद्गुणप्राधान्यात् । यद्यपि—

चैतन्यं यदधिष्ठानं लिङ्गदेहश्च यः पुनः ।
चिच्छाया लिङ्गदेहस्था तत्संघो जीव उच्यते ॥
(४।११)

अविद्यावृतकूटस्थे देहद्वययुता चितिः ।
शुक्तौ रूप्यवदध्यस्ता विक्षेपाध्यास एव हि ॥
(६।३३)

इति पञ्चदशीश्लोकयोः सूक्ष्मस्थूलयोरुभयोरपि देहव्यवहारस्तथापि कारणशरीरे कुत्रापि देहपदव्यवहारो नावलोक्यते, किन्तु शरीरव्यवहार एव; सूक्ष्मकारणयोः

शरीरयोरुपचयापचयस्याभावात्। कर्मादीनां विनाशेन सूक्ष्मशरीरस्य कारणशरीरस्य च स्वयमज्ञानात्मकत्वेन विशीर्यमाणत्वाद् भवति शरीरपदव्यवहारः। तत्र भोगसाधनं लिङ्गशरीरम्, भोगायतनञ्च स्थूलशरीरम्। तत्र प्राणिनां शुभाशुभकर्मभिर्युतं लिङ्गशरीरम्, तत्तत्कर्मजन्यफलभोगाय स्थूलं शरीरं दधाति, स्थूलशरीरमन्तरा कर्मफलभोगस्याशक्यत्वात्। अत एव स्थूलशरीरमभिलक्ष्यैव भोगायतनं शरीरमित्युक्तं प्राक्। तत्र केन शरीरेण कस्य कर्मणः फलं भोक्तुं शक्यत इति नियतैव शरीरधारणादिव्यवस्थेत्यग्रेऽस्योपरि विशेषेण विचारयिष्यते। नरकादियातनाया भोगाय नारकीयम्, स्वर्गादिसुखभोगायान्यदेव शरीरं धार्यते पुरुषैरिति पुराणादिषु प्राय उच्यते। न केवलं शरीरभेदः, अपि तु गुणभेदोऽपि। स्वर्गीया जनाः सत्त्वबहुलाः, नारकीयास्तु तमोबहुलाः। तत्र लिङ्गकारणशरीरयोस्त्यागः कदापि सृष्टेरारभ्य ब्रह्मज्ञानोदयपर्यन्तं न भवति, केवलं स्थूलदेहस्यैव। तदपेक्ष्यैव—"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥" इत्यादि गीतावचनम्। अत एव—"देही नित्यमवध्योऽयं देहे सर्वस्य भारत" इत्यादिश्लोके देहशब्दव्यवहारोऽवलोक्यते। तत्र—"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्यन्तम्। संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्॥" इति सांख्यतत्त्वकौमुदीस्थकारिकानुसारेण लिङ्गशरीरमेव कर्मादिभावैरधिवासितमनोबुद्ध्यधिष्ठितत्वेन संसरति संसारकार्यमनुभवति। तत्र संसरणं तत्तत्कर्मफलभोगार्थं तत्तत्स्थूलदेहाश्रयणरूपम्। तत्र संसरणप्रकारस्त्रिविधः—देवयानेन, पितृयानेन, जायस्व म्रियस्व इति तृतीयगत्यनुसारेण च। तत्र ये देवमार्गेण यान्ति तत्सम्बन्धि सूक्ष्मशरीरम्, तेन मार्गेण ब्रह्मलोकं गत्वा तदनुरूपं भोगसाधनं स्थूलशरीरं प्राप्य ब्रह्मणः स्थितिपर्यन्तं स्थित्वा ब्रह्मणा सहैवाज्ञानरूपकारणशरीरनाशाद् निःशरीरोऽसङ्गो मुक्तो भवति। अथ ये पितृमार्गेण गच्छन्ति, तेषां सूक्ष्मशरीरं तत्र तत्र चन्द्रादिलोकोपयोगि भोगायतनं स्थूलशरीरं प्राप्य तत्तच्छरीरं त्यजन् देवलोके गत्वा तत्तत्कर्मफलानि भुक्त्वा "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादिगीतावाक्यानुसारेण तेनैव मार्गेण परिवृत्ता यत्किञ्चिदवशिष्टकर्माणि रमणीयचरणा रमणीयां योनिमापद्यन्ते, कपूयचरणाः कपूयां योनिमापद्यन्ते। अत्र चरणपदेन कर्माण्युच्यन्ते। तत्रावधित्वेन श्वयोनिचाण्डालयोनिशूकरयोनीनामुपादानं निकृष्टयोन्युपलक्षणार्थम्। अथ ये द्वयोर्मार्गयो-

र्मध्ये केनापि मार्गेण न गतास्ते जायस्व म्रियस्वेति सततमावर्तमाना संसरन्ति। तत्र के देवमार्गेण गच्छन्ति के वा पितृमार्गेणेति जिज्ञासायां ये श्रद्धया तपसा निष्कामबुद्ध्या पञ्चाग्निविद्यां जानन्तोऽग्निहोत्रादिकर्माणि विदधति ते देवमार्गेण गच्छन्ति। ये सकामाः सन्त इष्टापूर्ते विदधन्त आसते ते पितृयानेन। ये तूभयविधकर्मणा रहिताः केवलमिन्द्रियादिसुखलिप्सया कर्म कुर्वन्तो जायस्व म्रियस्वेति रीत्या झटिति मृत्वाऽपरं शरीरं भोगायतनमिहैवाददते ते चक्रवदावर्तमाना इहैव भ्राम्यन्ति। तत्र य ऐहलौकिकं शरीरमुपाददते पितृमार्गेणान्यथा वा तेषां पञ्चाग्न्याहुतिद्वारेणैव स्थूल-शरीरप्राप्तिर्निश्चिता। तत्प्रकारश्च छान्दोग्योपनिषदि स्फुटं वर्ण्यते। तत्र देवयानपितृया-नयोर्वर्णनं श्रीमद्भागवते तृतीयस्कन्धे द्वात्रिंशदध्याये वरीवर्ति।

तत्र देवयानमार्गस्था अर्चिषमभिसंभवन्ति, अर्चिरभिमानिनी या देवता तामभि-गच्छन्ति, ततोऽहस्तदभिमानिदेवतालोके, ततः पक्षाभिमानिदेवतालोके, ततो मासाभिमानिदेवतालोके, ततः संवत्सराभिमानिदेवतालोके, तत आदित्यलोके, ततश्चन्द्रमसि, ततो विद्युल्लोके तत्रस्थो देव एनान् ब्रह्मलोके गमयति। तत्र ब्रह्मलोके तत्रत्यभोगानुकूलं स्थूलशरीरं प्राप्य ब्रह्मणा सह तदायुःपर्यन्तं स्थित्वा पश्चात्तेनैव साकं मुक्तिमुपयान्ति। तथा च श्रुतिः—"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥" इति।

ये त्विष्टापूर्तादिकं कर्म सकामाः फलान्यभिसन्धाय कुर्वन्ति ते पितृयानेन गच्छन्ति, इतो धूमाभिमानिदेवलोकं गत्वा ततो रात्र्यभिमानिदेवलोकम्, ततः कृष्णपक्षाभिमानिदेवलोकम्, ततो षड्मासाभिमानिदेवलोकम्, दक्षिणायनदेवलोकम्, ततः संवत्सराभिमानिदेवलोकमप्राप्यैव पितृलोकम्, तत आकाशद्वारेण चन्द्रलोकम्, तत्र स्थित्वा तदुपभोगान् भुक्त्वा पुण्याभोगेन च्युतास्तमेव मार्गमवलम्ब्य पञ्चाग्न्या-हुतिद्वारेणास्मिँल्लोके शरीरान्तरं गृह्णन्ति। तत्र पितृयानमार्गादागताः, अथ चोभय-स्माद् मार्गाद् भ्रष्टास्ते सर्वे चन्द्रलोकाख्यमग्निभावनया वर्तमानमाहुतिभावनया गत्वा पर्जन्यलोकम्, ततः पृथिवीलोकं प्राप्यान्नीभूत्वा पश्चात् पुरुषे रेतोरूपेण परिवृत्य स्त्रिया योनौ गत्वा कियद् मासान् आस्थाय पश्चाद् बहिर्गच्छन्तः संसरन्ति। एतत्सर्वं विस्त-रेण छान्दोग्योपनिषदि—"आपः पुरुषवचसो भवन्ति" इत्याद्युपसंहारेण प्रदर्शितम्। ब्रह्मसूत्रशाङ्करभाष्ययोरप्येतस्य प्रकारो विस्तारो महता समारोहेण प्रदर्शितः, तत्र सर्वत्र

सूक्ष्मशरीरविशिष्टस्यैव देहस्य गमनागमनमस्तीति निश्चयम्। एषा व्यवस्था मानवपशुपक्ष्यादीनां प्रदर्शिता। वृक्षलतागुल्मादीनां कीदृशी व्यवस्थेति न कुत्राप्युपवर्णिता पुराणादिषु शास्त्रेष्वन्येषु च। सन्ति च तेऽपि प्राणिन आपोमयप्राण इति श्रुतेः। पुराणादिषु चतुरशीतिलक्षयोनौ स्थावराणामपि वृक्षलतादीनामपि परिगणनात्। आधुनिकविज्ञातारस्तत्रापि पुरुषनारीज्ञातीः कल्पयित्वा गर्भाधानादिप्रक्रियामुपवर्णयन्ति।

तत्र पुरुषशुक्रे सूक्ष्मशरीरविशिष्टो जीवस्तिष्ठति, स एव स्त्रीयोनौ यदा शोणितसंयोगो भवति तदा द्रवरूपेण योषागर्भाशये स्थितो भूत्वा वर्द्धते। तत्र शुक्रशोणितसंयोगे यदा शुक्रस्याधिक्यं तदा पुमान्, यदा शोणितस्याधिक्यं तदा स्त्री, उभयोः साम्ये नपुंसकं जायते। तत्राहोरात्रेण वर्धमानस्य कललसंज्ञा जायते। पञ्चदिवसैर्वर्धमानस्य बुद्बुदसंज्ञा। दशमेऽहनि मांसमिश्रधातुयुतो भवति। स च मांसादिर्विंशाहे घनीभूतो भवति। पञ्चविंशतिदिवसे बलादेराधानं भवति तत्र। मासे सञ्जाते पृथ्वीजलतेजोवाय्वाकाशानां संयोगः। मासद्वये संपूर्णे त्वङ्मेदयोराविर्भावः। तृतीये मासे सञ्जाते मज्जास्थ्नोः समावेशः। चतुर्थे केशगुल्फयोः। पञ्चमे मासे जाते कर्णौ नासिके कुक्षिश्च जायन्ते। सप्तमे मासि कण्ठरन्ध्रम्, पृष्ठम्, गुह्यस्थानं चाविर्भूतं भवति। अष्टमे मासि पूर्णो गर्भोऽभिजायते। नवमे मासीच्छादिकं सर्वं जायते। तत्र पञ्चमहाभूतस्य प्रत्येकं पञ्चगुणाः शरीरे जायन्ते। पृथिव्यास्त्वगस्थि, नाडी, रोमाणि मांसाश्च। जलस्य लाला, मूत्रम्, मज्जा, शुक्रं, रक्तम्। तेजसः क्षुधा, तृष्णा, निद्रा, आलस्यम्, कान्तिः। वायोर्धावनम्, श्वसनम्, आकुञ्चनम्, प्रसारणम्, निरोधः। आकाशस्य घोषः, छिद्राणि, गाम्भीर्यम्, श्रवणम्, सर्वसंश्रयः। घ्राणत्वक्चक्षुरसनाश्रोत्राणि पञ्च ज्ञानेन्द्रियाणि। पाणिपादगुदोपस्थवाचः कर्मेन्द्रियाणि पञ्च। एवं दश प्राणाः। दश प्रधाननाड्यः। सार्धास्तिस्रकोटयो रोम्णाम्। एवं स्थूलशरीरं प्रतिक्षणं प्रचमानं ह्रसमानञ्च देहपदेन व्यवह्रियते। तदेष देहक्रमो गरुडपुराणे उत्तरखण्डे द्वाविंशेऽध्याये सम्यग् वर्णितः। अस्मिन्नेव शरीरे सकलब्रह्माण्डस्थितिः। अर्थादेकं शरीरमपि व्यस्तरूपेणैकं ब्रह्माण्डम्। समष्टिरूपेण च ब्रह्माण्डमपरं प्रसिद्धम्। अत एव शरीरस्य सम्यग् ज्ञानेन ब्रह्माण्डस्यापि ज्ञानं भवितुमर्हतीति योगिनो वदन्ति। एवं

तेन तेन कर्मणा तादृक् तादृक् शरीरं जायत इति [१]गरुडपुराणादिष्वनेकधा वर्णितम्।

तत्रेदमनुसन्धातव्यम्—तेन तेन कर्मणा तस्य तस्याङ्गस्य को वा नियतः सम्बन्धो येन तस्मिन्नेवाङ्गे तस्य प्रभावो भवति। यदीदमनुसन्धित्सितं स्यात् तदेकं नवीनं वस्तु जगतो समक्षं प्रस्तुतं भवेत्।

तत्र यौगिकसिद्धिशब्दार्थानुसारं विचार्येदानीं रूढसिद्धिशब्देन सह समासं विधाय देहसिद्धिशब्दं व्याचष्टे। देहस्य सिद्धिर्देहसिद्धिः, तत्र सिद्धिर्नाम—"अणिमा महिमा चैव गरिमा लघिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः॥" इति। तत्राणिमा नामात्यन्तं महतो पदार्थस्य शरीरादेरणुत्वकरणम्। दृश्यते हि—श्रीहनूमान् लङ्काप्रवेशसमये स्वीयं शरीरमत्यन्तं संक्षिप्य विडाल इव ह्रस्वेन रूपेण प्रविवेश। तथा चोक्तं वाल्मीकीयरामायणे—"सूर्ये चास्तं गते रात्रौ देहं संक्षिप्य मारुतिः। वृषदंशकमात्रः सन् बभूवाद्भुतदर्शनः॥" इति। एवं सुरसाया दर्शनसमये यदा तयाऽवरुद्धो हनूमान् शतयोजनपर्यन्तं स्वकीयं शरीरं वर्धितवान्, सुरसा स्वकीयं मुखं हनुमच्छरीरमवलोक्य तदनुसारं वर्धितवती। पुनः स्वशरीरमङ्गुष्ठमात्रं कृत्वा तद्वक्त्रं प्रविवेश। तथोक्तं वाल्मीकिरामायणे—

चकार सुरसा वक्त्रमशीतिं योजनायतम्।
हनूमाननलप्रख्यो नवतिं योजनोच्छ्रितः॥
चकार सुरसा वक्त्रं शतयोजनमायतम्।
तं दृष्ट्वा व्यादितं त्वास्यं वायुपुत्रः स बुद्धिमान्॥
दीर्घजिह्वं सुरसया सुभीमं नरकोपमम्।
स संक्षिप्यात्मनः कायं जीमूत इव मारुतिः॥
तस्मिन् मुहूर्ते हनुमान् बभूवाङ्गुष्ठमात्रकः। इति।

अत्रैव महिम्नः शक्तेरपि दृष्टान्तो वर्णितो वर्तते। एवं मातुरङ्के स्थितः कृष्णः स्वं भारमतीव गरिमाणं चकार, येन माता तं भारं सोढुं न शशाक, अतः स्वाङ्कात् कृष्णं पृथक्कृत्य भूमौ स्थापयामास। तथा चोक्तं भागवते—"एकदारोहमारूढं लालयन्ती सुतं सती। गरिमाणं शिशोर्वोढुं न सेहे गिरिकूटवत्॥" इति। पश्चाद् यदा

---

१. गरुडपुराणे उत्तरखण्डे चतुर्स्त्रिंशेऽध्याये १–१५ श्लोका द्रष्टव्याः।

तृणावर्तः कृष्णमुत्थाप्य आकाशे उत्पपात तदा कृष्णेन स्वकीयो भार एतावान् विहितो येन तं भारं सोढुं सोऽसमर्थो जातः। तथा च भागवते—"तृणावर्तः शान्तरयो वात्यारूपधरो हरन्। कृष्णं नभोगतो गन्तुं नाशक्नोद्धरिभारभृत्॥" इति। तथा च गरिमसिद्धेरेवैतत्फलम्। एवं त्रिविक्रमो यदा बलेः सकाशात् पदत्रयपरिमितां भूमिमयाचत, तदा सङ्कल्पसमये स्वशरीरमेतावद् वर्धितं येन पदत्रयेण लोकत्रयस्य भूमेर्मापनं जातम्, तदापि पूर्णं नाभवत्। तत्र भागवतस्यैष श्लोकः—

तद्वामनं रूपमवर्धताद्भुतं हरेरनन्तस्य गुणत्रयात्मकम्।
खं भूर्दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत॥

इत्यादिना। एवमिन्द्रेण क्रुद्धेन मूसलधारवर्षणेन परिप्लाविते व्रजे भगवता श्रीकृष्णेन सप्ताहपर्यन्तं गोवर्धनपर्वतस्य धारणं विधाय व्रजो रक्षितः। तत्र कारणगवेषणायां लघिमशक्तिरेव दृष्टिपथमायाति। सा च शक्तिः कृष्णस्य शरीरे वर्तमाना देहशक्तिः। तथा चोक्तं भागवते—

इत्युक्त्वैकेन हस्तेन कृत्वा गोवर्धनाचलम्।
दधार लीलया कृष्णश्छत्राकमिव बालकः॥ इति।

प्राप्तिः प्राकाम्यमीशित्वं वशित्वमितीमाश्चतस्रः शक्तयो न शरीरस्य, अपि तु मनसः पूर्वोक्तास्तिस्रः शक्तयो देहस्य। एवमन्तर्धानमपि शरीरस्यैका शक्तिः, येन शरीरस्य चक्षुरादिना प्रत्यक्षं न भवति। यथा भगवतः श्रीकृष्णस्यैव गोपीभिः सह रासक्रीडाप्रसङ्गे यदा गोपीनां मनसि गर्वो जातो यथा वयमेतावत्यः सुभगा यदस्माकं वशीभूत एव श्रीकृष्णः। तदा भगवता श्रीकृष्णेनान्तर्हितमेकां गोपिकामादाय। तदा सा गोपिकात्यन्तमभिमानपूर्णा जाता। उक्तवती सा यदहमायासेन गन्तुमसमर्था पद्भ्याम्, ततः स्कन्धमारोढुं सोपक्रमा यदाऽभवत्, तदैव भगवता पुनरप्यन्तर्हितम्। तथा च भागवते—"तासां तत्सौभगमदं वीक्ष्य मानं च केशवः। प्रशमाय प्रसादाय तत्रैवान्तरधीयत॥" इति, "एवमुक्तः प्रियामाह स्कन्ध आरुह्यतामिति। ततश्चान्तर्दधे कृष्णः सा वधूरन्वतप्यत" इति च। एवमन्तर्धानादिकं राक्षसैः साकं युद्धे बहुधा जायते। यतो हि ते मायाविनः स्वीयया मायायाऽन्तर्धाय स्वशत्रून्निघ्नन्त आसन्निति कथा पुराणेषु सर्वत्र वर्णिता आसीत्।

रामायणे तु मेघनादस्य मायातीव प्रसिद्धा। एवमेषाऽपि शरीरसिद्धिरेव, यद्रूपान्तरेण परिवर्तनम्। यथा मारीचः स्वीयं शरीरं मृगरूपेण परिवर्तितवान्। तदुक्तं केनचित् कविना—

असम्भवं हेममृगस्य जन्म तथापि रामो लुलुभे मृगाय।
प्रायः समापन्नविपत्तिकाले धियो हि पुंसां मलिना भवन्ति।

तत्रापि न केवलं मृगरूपेण परिवर्तनं जातम्; अपि तु काञ्चनमृगरूपेण। एवं परशरीरप्रवेशोऽप्येका सिद्धिः। तत्र शङ्कराचार्यस्य भगवतः कथा प्रायः सर्वेषु विज्ञजनेषु प्रसिद्धैव। यन्मण्डनमिश्रेण सह शास्त्रार्थे जाते यदा मण्डनमिश्र आत्मनः पराजयं स्वीकृतवान्, तदा तदीया पत्नी कामशास्त्रविषयकं शास्त्रार्थं कर्तुमारेभे। श्रीशङ्कराचार्यस्तु नैष्ठिकसंन्यासी कथं तद्विषये शास्त्रार्थं विधातुं समर्थः स्यादिति हेतोः षण्मासानामवधिं कृत्वैकस्य कस्यचिन्मृतस्य राज्ञः शरीरे प्रवेशं विधाय तच्छास्त्रमर्माणि ज्ञात्वा पश्चाच्छरीरं परिवृत्य शास्त्रार्थे विजयी जातः। शाङ्करभाष्ये शरीरपरिवर्तनस्य प्रसङ्गोऽनेकधा वर्णितः। भामत्यामपि परकायानुप्रवेश उक्तः। एवं दूरस्थविषयाणामप्यवलोकनं सिद्धिः। तथाहि—यदा अश्वमेधयज्ञे दिलीपः स्वतनयं रघुमश्वरक्षायै नियुज्य तुरङ्ग-मुत्सृष्टवान्, तदैवेन्द्रेण यज्ञविघातार्थं तुरगोऽपहृतः। तदाऽपहरन्तमिन्द्रं तुरगञ्चान-वलोक्य विषादमुपपन्नो रघुर्वशिष्ठधेनोर्नन्दिन्या अङ्गनिष्यन्दजलं लोचनयोः प्रमृज्या-तीन्द्रियेष्वप्युपपन्नदर्शनोऽभूत्। तेनाश्वं हरन्तमिन्द्रं ददर्श। अतो देहसिद्धिरियमपि वक्तुं शक्यते। तत्र मन्ये वेदान्तसिद्धान्तेनाविद्याया आवरणशक्त्याभिभवात् पदार्थ-प्रतिभासो न भवति। केवलस्यान्तःकरणस्य स्वच्छत्वात् सत्त्वगुणनिष्पन्नत्वाच्च तदीयया विषयाकारवृत्त्या आवरणनाशे विषयः स्पष्टं प्रतिभासते। तत्र यदा तपसा सुकृतकर्मणा देहेन्द्रियादौ सत्त्वगुणस्याधिक्यं जायते, तदा सत्त्वगुणस्य लघुत्वाद् दूरतरगमनेन सत्त्वबहुलतया चावरणस्य दूरपर्यन्तमपि भङ्गे तत्तद्विषयप्रतिभास आञ्जस्येनोपजायते। सत्त्वगुणस्य लघुत्वमेतच्च "सत्त्वं लघु प्रकाशकम्" इत्यादि सांख्यकारिकायां स्पष्टमुक्तम्। तत्र पूर्वोक्तरीत्या सत्स्वपि पृथिवीजलतेजोवाय्वाकाशेषु कदाचिद् योगिनः स्वशरीरादेवाग्निमुत्पाद्य तेनैवाग्निना दग्धाः स्वकीयं देहं तत्यजुः। तत्राग्न्युत्पादनमपि देहसिद्धिरेव।

एवं तन्त्रे वैदिकसन्ध्यादिष्वनुष्ठानादिकं क्रियते, तत्र सर्वत्राङ्गन्यासकरन्यासादीनां विधानमवलोक्यते। गायत्र्यनुष्ठाने आदावन्ते च मुद्रा विहिताः। तत्राङ्गन्यासाः षड् मुख्यतया भवन्ति। हृदयाय नमः, शिरसे स्वाहा, शिखायै वषट्, कवचाय हुँ, नेत्राभ्यां वौषट्, अस्त्राय फट्; एवं करतलकरपृष्ठाभ्यां साकं पञ्चाङ्गुलीनां न्यासः। एते न्यासाः सर्वत्र सर्वस्मिन् मन्त्रजपे मुख्यतयोपात्ताः। ततो वर्णक्रमेणाङ्गन्यास इत्येकः क्रमः। एतान् न्यासानविधाय विहितो जपो निष्फलतां यातीति शास्त्राणां तान्त्रिकाणां च मर्यादा वर्तते। अनेनैतदवगम्यते यत् सर्वाः सिद्धयो देहाधीना एव, देहसिद्धिशब्देन वक्तुं शक्यन्ते। एवं दुर्गापाठादयः सर्वत्र भारते प्रायः प्रचलिता आसन्नेककार्यसंसिद्धये। तत्राप्यङ्गन्यासकरन्यासादीनां विधानं वर्तते। तेन दुर्गापाठजन्यसिद्धीनामपि देहसिद्धयधीनत्वमेव। यद्यपि देहस्योपयोगः सांसारिके सर्वस्मिन् कार्ये विद्यते, देहं विना जगतो यात्राया एवासम्भवापत्तेः। अतो नान्तरीयकतया देहादीनामुपादाने देहसिद्धिव्यवहारो नैव कर्तुं शक्यते, किन्तु यत्र विशेषरूपेण देहस्योपयोगः क्रियते, तद्देहसिद्धिपदेन वक्तुं शक्यते। तत्र ये तान्त्रिका अत्र समवेता अत्र किञ्चित् प्रकाशं ददानाः कदाचिदस्मान् कृतार्थयिष्यन्ति।

अपरञ्च नवमस्कन्धे भागवते सुकन्याच्यवनयोः कथाऽस्ति। तत्र च्यवनः खल्वेतावान् समाधिस्थो जातो येन तच्छरीरस्योपरि वल्मीको जातः, वल्मीकान्तर्गते केवलं नयने ज्योतिषी इवावलोक्येते, तद्दृष्ट्वा सुकन्या कण्टकेन ज्योतीरूपे नेत्ररन्ध्रे स्फोटितवती। ततो जातयाऽसृग्धारया महान् क्लेशो मुनेर्जातः। अथ मुनेः क्रोधात् सुकन्यापितुः शर्यातेः सैन्यबलस्य शकृन्मूत्रनिरोधो जातः। पश्चाद् राज्ञा सुकन्यादानेन विनयेन स्तुत्या च प्रसन्नश्च्यवनः सुकन्यया सह रममाणः कदाचित् स्वाश्रमे आगतौ नासत्यौ प्रसाद्य वरं नवीनवयोरूपं जग्राह। तत्र नासत्याभ्यामेकस्मिन् सिद्धविनिर्मिते ह्रदे प्रवेशिते ते उभे अतीव शोभनवपुषी संवृत्ते। अयमपि वल्मीकोत्पत्तिपर्यन्तं शरीरस्य निश्चेष्टतया धारणमेकः सिद्धिप्रकारः। ततो ह्रदे निमज्जनेन रूपान्तरप्राप्तिरिति द्वितीयो देहसिद्धिप्रकारः। एतत्सर्वं किं कथानकमात्रमुतास्ति कश्चिद्विधिः, किमद्याप्येवं ह्रदो विनिर्मातुं शक्यते, यत्र स्नानेनैतावान् नीरुग् रूपसौन्दर्यपुष्ट्यादियुतं वपुः कर्तुं शक्येत। को वा एष समाधिर्येन वल्मीकोत्पत्तिपर्यन्तं शरीरस्यान्नपानादिमन्तराऽपि स्थिरीकरणं सम्भवेत् प्राणत्यागश्च न स्यात्।

नवमस्कन्धस्य प्रथमेऽध्याय एका कथाऽतीव विलक्षणा इलोपाख्यानं नाम। तत्र श्राद्धदेवो नाम मनुरपत्यरहितत्वाद् वशिष्ठद्वारा मित्रावरुणयोरिष्टिं चकार। तस्य राज्ञः स्त्री श्रद्धा नाम। तस्या दुहित्रर्थमभिलाषो जातः। सा गत्वा होतारं कथितवती। तथा चाध्वर्युणा प्रैषे कृते सति होत्रा वषट्कारे व्यभिचरितत्वाद् इला नाम कन्या जाता। पश्चाद् राज्ञा तत्कारणे पृष्टे होतुर्व्यभिचारेणैतद् जातमिति ऋषिभिरुक्तम्, तत्पश्चाद् अत्यन्तशोकतप्ते राज्ञि ब्रह्मणा प्रपितामहेन परमात्मानमाराध्य पुरुषरूपेण सम्पादिता सा इला सुद्युम्ननाम्ना। ततः काले जात एकदा मृगयां चरन् स सुद्युम्नो मेरोः पर्वतस्याधस्तात् कस्मिंश्चिद् वने प्रविवेश। प्रविशन्नेव पुनरपि स स्त्रीत्वमाप ससैन्यम्। तत्र तद्वनप्रवेशेन कथमेवमभूतदिति जिज्ञासायां कथानकमिदमुत्तररूपेणागतम्—यत्तस्मिन्नेव वने शिवः पार्वत्या सह रममाण आस्ते। यदार्षयः सहसैव द्रष्टुमागताः, तदा विवासाः पार्वती अत्यन्तं लज्जिता। एवं वस्त्रे समाहिते तया ऋषयोऽपि भगवतो विष्णोः सकाशं गतवन्तः। ततः पार्वतीप्रियकाम्यया भगवानेवमादिदेश—योऽपि हि जन्तुरत्रागच्छति स स्त्रीरूपेणात्र परिवर्तितो भविष्यति। तस्यां स्त्रीत्वमापन्नायामेव बुधसम्पर्कात् पुरूरवा नाम विख्यातः पुरुषोऽभवत्। ततो वशिष्ठस्य प्रयत्नेन सन्तुष्टः शङ्करः पर्यायेण मासमेकं पुरुषः मासमेकं स्त्रीत्येवं व्यवस्थां कृतवान्।

अत्र वारत्रयं लिङ्गपरिवर्तनं जातम्, पश्चाच्च मासं मासं लिङ्गपरिवर्तनं जीवनपर्यन्तमभूत्। इयमप्येकाऽत्यन्तमपूर्वा देहसिद्धिः। इदानीं श्रूयते, समाचारपत्रे कदाचित् कदाचित् पठ्यते च यद् विदेशे लिङ्गपरिवर्तनं शल्यक्रियया क्रियते। जातश्च तादृशपरिवर्तनम्। मन्ये तस्मिन्नपि वने भगवता शङ्करेण तादृशी काचित् प्रक्रिया समारब्धा येन पुरुषाणां स्त्रीत्वं सम्भवितुमर्हतीति। इदं तु सर्वतोऽधिकं वैलक्षण्यं यदेकस्या एव व्यक्तेर्लिङ्गपरिवर्तनाद् मासेनैकेन पुरुषत्वम्, मासेनैकेन स्त्रीत्वमिति। अद्यापि यावत् किमेतद् वैज्ञानिकैः कर्तुं प्रायत्यत। किं वा तैरेतद्विषयिका कल्पनाऽपि मनसि स्थापिता। एतादृश्यो देहसिद्धयो बह्व्यः पुराणेष्ववलोक्यन्ते। सा किं तथ्यरूपा कथानकरूपा कल्पनारूपा वेति प्रश्ने भवन्त एव विद्वांस उत्तरयितुं शक्नुवन्ति। यतो हि तादृशी प्रक्रिया कुत्रापि नोपलभ्यते। तादृशी प्रक्रिया आसीन्न वेति नो

जानीमः। वह्वयश्च प्रक्रिया मन्त्रयन्त्रतन्त्रादिरूपेण पुराणेषु तन्त्रादिग्रन्थेषूपलभ्यन्ते, परन्तु तस्याः प्रक्रियायाः साधक एवेदानीमत्यन्तं दुर्लभः। यस्या देहसिद्धेरासनप्राणायामादेः प्रकारे यत्र कुत्रचित् कियता परिमाणेनोपलभ्यते, तस्यापि साधका विरला एवोपलभ्यमानाः सन्ति। अतः संभूय कश्चिद् यत्नो विधेयः। तादृशी प्रक्रिया पुनरप्युज्जीविता भवेदित्यलमियता दिग्दर्शनेन ॥



# पुराणगोष्ठ्यां विचारधारा

श्रीदीनानाथशर्मा शास्त्री सारस्वतः,
दिल्लीनगरस्थरामदलसंस्कृतमहाविद्यालयस्य प्रधानाचार्यः।

भारतीयायाः संस्कृतेर्विद्यायाश्चावबोधार्थं पुराणानि खलु विश्वकोषतां भजन्ते, अत्र न कस्यापि मनुतनुजनुषो विसंवादः। तत्रालौकिकचमत्कारान् दृष्ट्वाल्पश्रुताः केचन तेष्वविश्वासं बिभ्रति। तादृग्विधभ्रमनिरासायेदृशीनां गोष्ठीनां प्रयोजनीयताऽनुभूयते।

आकाशगमनम्, लोकान्तरेषु भूमितो गमनम्, तेभ्यो भूम्यामागमनम्, मनोजवित्वम्, कार्यसिद्धिरित्यादिविषयोऽद्य विविच्यते।

## सिद्धीनां स्वरूपम्

अमरकोषे प्रोक्तम्—'ऐश्वर्यमणिमादिकमष्टधा' (१।१।३६) अत्राणिमादिसिद्धीनामष्टौ भेदाः प्रोक्ताः। तद्विषये एकं प्रसिद्धपद्यं तत्र प्राप्यते—

अणिमा महिमा चैव गरिमा लघिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः॥

इमा एव सिद्धयः सांख्यकारिकायां सर्वतन्त्रस्वतन्त्रेण श्रीवाचस्पतिमिश्रेण, तथा योगदर्शनभाष्ये श्रीव्यासेन विवृतेषद्भेदेन।

तत्र २३ कारिकाभाष्ये श्रीमिश्रमहाभागः स्पष्टमाचष्ट—१ अणिमा—अणुभावः, यतः शिलामपि प्रविशति। २ लघिमा—लघुभावः, यतः सूर्यमरीचीनालम्ब्य सूर्यलोकं याति। ३ महिमा—महतो भावः, यतो महान् भवति। ४ प्राप्तिः—अङ्गुल्यग्रेण स्पृशति चन्द्रम्। ५ प्राकाम्यम्—इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति च, यथा–उदके। ६ वशित्वम्—भूतभौतिकं वशीभवत्यस्यावश्यम्। ७ ईशित्वम्—भूतभौतिकानां प्रभवस्थितिमीष्टे। यच्च ८ कामावसायित्वम्—सत्यसङ्कल्पता। यथाऽस्य सङ्कल्पो भवति भूतेषु [ पृथिवीजलादिषु ], तथैव भूतानि भवन्ति।

हन्त ! सिद्धिषु कियती सिद्धिरस्ति । न्यायदर्शने वात्स्यायनभाष्येऽपि सिद्धीनां महिमा सङ्केतितः—'योगी खल्वृद्धौ ( अणिमादिसिद्धौ ) प्रादुर्भूतायां विकरणधर्मा ( अस्मदादिकरणविलक्षणकरण इति तात्पर्यटीकायाम्, अद्भुतेन्द्रियसामर्थ्यवानिति हृदयम् ) निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयानुपलभते (३।२।१९)।

इदानीं व्यासभाष्यतः सिद्धीनां निरूपणं श्रूयताम्—१ अणिमा—भवत्यणुः । २ लघिमा—लघुर्भवति । ३ महिमा—महान् भवति । ४ प्राप्तिः—अङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । ५ प्राकाम्यम्—इच्छानभिघातो भूमावुन्मज्जति, निमज्जति; यथा–उदके । ६ वशित्वम्—भूतभौतिकेषु वशी ( स्वतन्त्रो ) भवति, अवश्यश्चान्येषाम् । ईशित्वम्—तेषां प्रभवाप्ययव्यूहानामीष्टे । ८ यच्च कामावसायित्वम्—सत्यसङ्कल्पता । यथा सङ्कल्पः, तथा भूतप्रकृतीनामवस्थानम्; न च शक्तोऽपि पदार्थविपर्यासं करोति ।

अत्र गरिम्णो वर्णनं न जातम् । गरिमा—इत्यस्य भावो गुरुत्वं यत् तं कोऽप्युत्थापयितुं समर्थो न भवेत् । लघुत्वम्—यल्लघुरपि बालकस्तमुत्थापयितुं प्रभवेत् ।

पुरैतादृशसिद्धीनां प्राप्तिस्तपोवशाद् भवति स्म । तदैवं मनुना प्रोक्तम्—

यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम् ।
सर्वं तत् तपसा साध्यं तपो हि दुरतिक्रमम् ॥
( ११।२३८ ) ।

शतपथब्राह्मणे प्रोक्तम्—'तपसा वै लोकं जयन्ति' ( ३।४।४।२७ )। योगदर्शने कैवल्यपादस्य प्रथमसूत्रस्य भाष्ये प्रोक्तम्—'तपसा सङ्कल्पसिद्धिः' । एतेन तपोबलेन सर्वं वस्तु साधयितुं शक्यमिति सिद्ध्यति । तदैव तपस्विना विश्वामित्रेण ऋषिणा अगाधा नद्यः प्रोक्ताः—'गाधा भवत' इति । तदा ता अगाधतो गाधतामस्याक्षुः, ततश्च स नदीनां पारं प्राप्त इति निरुक्ते ( २।२४।६ ) स्पष्टम् । एतत्फलस्वरूपमेव तपस्विनागस्त्येन समुद्रस्य पानं कृतम् । तपस्ययैव वाक्सिद्धिः कायसिद्धिश्च जायते स्म । ततश्च वरशापप्रदानमुपपद्यते स्म मुनीनाम् ।

## आकाशगमनम्

इतश्च एतदादिकं कृत्यजातम् ऋषिमुनयः कुर्वन्ति स्म । तेषां शरीरेषु किमपि वैलक्षण्यमपि बभूव । तदीयशरीरेषु पार्थिवत्वं न्यूनमासीत्, तेजोवायुप्रभृतीनां

भूतानामधिकृताऽऽसीत्। तत आकाशादिगमनेऽपि तत्रासम्भवो नाभवत्। यत् कार्यमद्यतना वैज्ञानिका आधिभौतिकयन्त्रतः कुर्वन्ति, तत् प्राक्तना योगिन आध्यात्मिकशक्त्या चक्रुः। योगदर्शनस्य साधनपादीयप्रथमसूत्रस्य व्यासभाष्ये प्रोक्तम्—"नातपस्विनो योगः सिद्ध्यति"। एतेन सिद्धं यत् तपस्यया विना योगो न सिद्ध्यति। एतेन स्पष्टं यत्—तपस्वी योगी भवति। योगस्य विभूतयश्च योगदर्शने विभूतिपादे स्पष्टाः। ततश्च तत्र कोऽप्यसम्भवो न तिष्ठति।

अत्र खलु जना भ्राम्यन्ति यद् गुरुपदार्थ उड्डयितुं न प्रभवति। तदाकाशे गुरूणां जनानां गमनागमनं कथं भवेत्? अत्रैवं ज्ञेयं यत्—आकाशे उड्डीयमानाः पक्षिणः किं गुरुत्वयुक्ता न सन्ति? वायुयानानि किं गुरुत्वयुक्तानि न भवन्ति? तत् कथं तान्युड्डीयन्ते? मुलताने सर्कसे मरुत्तरोऽपि (मोटर) अस्माभिरुड्डीयमानो दृष्टः।

एतेन स्पष्टं यत्—गुरुपदार्थोऽपि विधानविशेषेण लघुर्भवितुं शक्नोति। पक्षिणो गुरुपदार्था अपि पक्षैरित्थं वायुमुत्पादयन्ति, येन ते लघवो जायन्ते, प्रतीघातकर्तृ वायुं चातिक्राम्यन्ति। आकाशयानान्यपि 'पैट्रोल' द्वारा अग्निमचक्रचङ्क्रमणं विधाय आत्मानं लघूकुर्वन्ति। तेनैव तानि लाघवमश्नुवते; तत उत्थापकयन्त्रद्वारा चोड्डीयन्ते।

सुश्रुतसंहितायाः सूत्रस्थाने प्रोक्तम्—'अग्निवायू हि लघू, लघुत्वाच्च तान्यूर्ध्वमुत्तिष्ठन्ति' (४१।६)। तत्रैवाग्रे प्रोक्तम्—'आकाशपवनदहनतोयभूमिषु... परस्परसंसर्गात्, परस्परानुग्रहात्, परस्परानुप्रवेशाच्च सर्वेषु सर्वेषां सान्निध्यमस्ति; उक्तमपि कर्मानुग्रहणम् (४२।३)। एवमृषयोऽपि योगेनैषामुत्कर्षापकर्षकरणे निष्णाता बभूवुः। तदा ते स्वस्मिन् पृथिव्याद्यंशं प्राणायामादियोगक्रियाभिर्न्यूनं कृत्वा, अग्निवायू च प्रवर्ध्य लघवः सन्त आकाशं स्वयं गन्तुं शेकुः।

ऋषीणां शरीरस्य वैलक्षण्यं दर्शयन् प्रशस्तपादभाष्यं वक्ति—तत्रायोनिजमनपेक्ष्य शुक्रशोणितं देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते (द्रव्यग्रन्थे पृथिवीनिरूपणे)। तद् अनपेक्ष्यैव शुक्रशोणितं धर्मविशेषसहितेभ्योऽणुभ्य उत्पन्नानां मुनीनां शुक्रशोणितद्वारोत्पन्नानामस्मदादिकानामपेक्षया विलक्षणोत्पत्तिमत्त्वात्, शुक्रशोणिते पार्थिवभागस्य भूयिष्ठत्वाद् ऋषीणां च पार्थिवांशनैयून्यवशाद्

अग्निवाय्वोराधिक्येन लाघववशात् स्वत एवाकाशगमनमुपपन्नमेव। वेदादिशास्त्रेषु ऋषयो मनुष्यतो भिन्नयोनिमन्तः स्वीकृताः।

गुर्व्यपि पृथिवी, गुर्व्योऽपि चापो यदा सूक्ष्मतां प्रपद्यन्ते, तदा ता उपर्यपि गच्छन्ति। अत एवास्माकं गुरुस्थूलशरीरं मरणावसरेऽधो निपतति, सूक्ष्मशरीरं चाकाशाभिमुखं प्रसर्पति। एवं गुरवोऽपि योगिमुनिऋषयः स्वकीयशक्तिविशेषेण आत्मनि सूक्ष्मतामाधाय आकाशाभिमुखं गमने शेकुः।

अत एव यदा अर्जुनः पाशुपतास्त्रं प्राप्तुं स्वर्गं गन्तुमियेष, तदा तत्रोक्तम्—

'अगच्छत् पर्वतं पुण्यमेकाह्नैव महामनाः।
मनोजवगतिर्भूत्वा योगयुक्तो यथाऽनिलः॥

( महा० वनपर्व ३७।४० )

अर्जुनोऽप्यथ तत्रैव तस्थौ योगसमन्वितः। ( ३७।६० )।

अत्र अर्जुनस्य योगयुक्तत्वोक्त्या लघुता प्रोक्ता, तेनैव च देवलोकीयपर्वतं प्राप्तः सः।

त एव योगिनो यौगिकप्रक्रियया स्ववपुष्येतावद् वायुं प्रपूरयितुं शेकुः, यत् तेऽत्यन्तगुरवो जायन्ते स्म। तान् कोऽप्युत्थापयितुं न प्रबभूव। अत एव ब्रह्मसूत्रशाङ्करभाष्ये प्रोक्तम्—'ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम्' ( १।३।३३ )।

योगदर्शने प्रोक्तम्—कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्तेश्च आकाशगमनम् ( विभूतिपादे ४२ सूत्रम् )। अत्र व्यासभाष्यम्—यत्र कायस्तत्राकाशम्। तस्यावकाशदानात् कायस्य सम्बन्धः प्राप्तिः। तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुः। लघुत्वाच्च जले पादाभ्यां विहरति। ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति। ततो यथेष्टमाकाशगतिरस्य भवति। ( योग० ३।४२ )।

अस्यैव दर्शनस्य कैवल्यपादे प्रथमसूत्रस्य व्यासभाष्ये प्रोक्तम्—मन्त्रैराकाशगमनाणिमादिलाभः ''' इत्येवमपि समाधिजाः सिद्धयो व्याख्याताः। एवं विश्वामित्रकृतमन्त्रसमाधिसामर्थ्यात् त्रिशङ्कोराकाशगमनमपि सिद्धम्।

यजुर्वेदमाध्यन्दिनसंहितायां प्रोक्तम्—"पृथिव्या अयम् उद् अन्तरिक्षमारुह्य अन्तरिक्षाद् दिवमारुह्य दिवो नाकस्य पृष्ठात् स्वर्ज्योतिरगाम् अहम्" (१७।८७)। अत्राऽप्याकाशारोहणं वैदिकं सूचितम्।

छान्दोग्योपनिषद्यपि प्रोक्तम्—"ये इह आत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान् कामान्, तेषां सर्वेषु लोकेषु कामचारो भवति" (८।१।६)। अत्र सर्वेषु लोकलोकान्तरेषु गमनं सूचितम्।

थियोसाफीमताविष्कर्त्र्या मैडमब्लावाइस्कीनाम्न्या रमण्या स्वप्रणीते 'इवीक्स-अनवील्ड' नामकपुस्तके योगशक्तिवर्णनं लिखन्त्या प्रोक्तम्—प्रत्येकपुरुषस्य नैगिटिवशक्तिं पृथिवी स्वपाजिटिवशक्त्या समाकर्षति, तेनैव पुरुषाः पृथिव्या इतस्ततो न भवन्ति, परं यदा योगिनोऽधिकमात्रायां प्राणान् आच्छाद्यन्ते तदा तेषु नैगिटिवशक्तिस्थाने पाजिटिवशक्तिरत्यन्तं वर्धते। पाजिटिवशक्त्याः पाजिटिवशक्त्या सह विकर्षणसम्बन्धोऽस्ति, न खल्वाकर्षणसम्बन्धः। उक्तं योगिनं पृथिव्याक्रष्टुं न प्रभवति, किन्तु विकर्षणसम्बन्धद्वारा तं पृथक् करोति, येन योगी योगबलद्वाराऽऽकाशमार्गं गन्तुं प्रभवतीति।

ततो वायुयानादयस्तां पार्थिवाकर्षणशक्तिं यन्त्रद्वारा अभिकर्षन्ति, योगिनस्त्वात्मिकशक्त्येति विशेषः। अत एव योगदर्शने व्यासभाष्ये प्रोक्तम्—"पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियाम्"।

एवमेवाकाशादवतरणमप्याकाशगमनवदवसेयम्। योगिप्रभृतयः प्राणायामादियोगक्रियाभिरात्मानं लघुतमं निर्मान्ति स्म। लघुतमवस्तु उपरिष्टात् पात्येत, तत् शनैः शनैरधस्तादागच्छति, न यौगपद्येन। यथा द्विभूमप्रासादाद् घटः पात्येत, सोऽत्यन्तशीघ्रं पतति गौरवात्, परं कर्गदं तु पातितं सच्छनैः शनैरध आयाति; तदपेक्षया लघुत्वात्। यथाऽद्यत्वे वायुयानचालकाश्छत्र( पैराशूट )द्वारा आकाशाच्छनैः शनैरवतरन्ति, यतस्तच्छत्रे वायुः प्रपूर्य तद् वस्तु भारयुक्तं विधत्ते। इतश्चाकाशस्थवायुस्तच्छत्रमूर्ध्वमाकर्षति, छत्रधारकश्च तद्द्वारा शनैः शनैराकाशतोऽवतरति। एवं योगिमुन्यर्षिभिरपि योगक्रियारतप्रयत्नैस्तादृक्शक्तिः संचिच्ये, परं वर्तमाने तादृक्शक्तिप्राप्तिः शीघ्रतया प्राप्तुं न सुशका, तथाप्यत्र प्रयत्नो न हेयः। योगसमाधिप्राणायामतपःशक्तिवर्धने च प्रपतनीयं भवेत्, येन साफल्यं लब्धुं शक्येत।

मनोजवित्वम् "ततो मनोजवित्वं विकरणाभावः प्रधानजयश्च" ( ३।४८ ) इति योगदर्शने वर्णितम् । तच्च करणपञ्चकजपादधिगम्यते ।

अत्रैवमाशङ्कन्तेऽद्यतना जना यद् अन्तर्धानमसम्भवि । यदि कथ्येत यद् यमकिङ्करादयः सूक्ष्मदेहमपि धारयन्ति; तत् प्रथमं पर्वतायमानानां तेषां महा-महान्त्यस्थीनि कथं सूक्ष्माणि स्युरिति ।

अत्रैवमवसेयं यदाशङ्का यदि सूक्ष्मदेहधारणं स्वीकर्तुमुद्यताः, तत् तदीयास्थ्ना सूक्ष्मतायामेव कुतः संशीतिः ? यः स्वकीयं देहं संक्षेप्तुं शक्ष्यति स स्वकीयान्यस्थीन्येव संक्षेप्तुं कथं न प्रभवेत् ? परमात्मा बीजरूपः; यदा तद् बीजं विकसति, तदा स ब्रह्माण्डवृक्षतां कलयति । प्रलये च स तत् सर्वं पुनः संक्षिप्य बीजरूपें जायते । एवं यस्मिन् यमकिङ्करादौ यदा स्थूलतेच्छा भवति, स तदा पर्वतायमानतां कलयति । यदा स सूक्ष्मो बुभूषति, तदा स स्वस्मिन्नेव निविश्य परमाणूयते । बीजं वृक्षमुत्पादयति, वृक्षश्च बीजम् ।

शल्यकः ( साही ) स्वकीयकण्टकान् प्रकटयति, पुनश्च तान्येव स्वाभ्यन्तरे निवेशयति । कूर्मः स्वदेहं विकासयितुं सङ्कोचयितुं च क्षमते । एवं यः स्वदेहं संक्षिपति, स स्वकीयास्थीन्यपि । शुक्रेऽस्थीन्यपि भवन्ति, परन्तु सूक्ष्मीभूतानि । अत्र मनोबलस्य प्रबलतापि कारणं भवितुमर्हति । योगदर्शने चित्तबलस्यापि सत्ता स्वीकृता । तत्र कैवल्यपादीयदशमसूत्रस्य व्यासभाष्ये प्रोक्तम्—दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्तुमुत्सहेत ? समुद्रमगस्त्यवद् वा [ चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा ] पिबेत् ? ( ४।१० ) ।

अस्मदीयं तात्पर्यमिदं यन्मनोबलस्य सत्तापि भवति । तद्बलेनैवैकेनर्षिणैकं समृद्धं नगरं दण्डकारण्यरूपे परिणमितम् । अगस्त्येन चर्षिणा समुद्रो मनोबलबलेन पीतः । तच्चित्तबलेनात्मनः सूक्ष्मीकरणमेवान्तर्धानविद्याया मूलम् । य आत्मानं सूक्ष्मं कर्तुं शक्ष्यति, स इतरस्य दृष्टौ स्वयमन्तर्धास्यति । ब्रह्मसूत्रे शारीरकभाष्ये आचार्यशङ्करस्वामिनापि स्वीकृतमेतत्—परैश्च न दृश्यते, अन्तर्धानादिक्रियायोगात् । ( १।३।८७ ) ।

इतश्चैतदप्यवधेयं यत् पृथिवीलोकस्थानामिदमस्माकं शरीरं पाञ्चभौतिकम्, तत्र पृथिवी मुख्या। परं लोकान्तरीयदिव्यशरीराणि तु न पृथिवीबहुलानि; किन्तु तत्र तेजोवाय्वोर्बाहुल्यं भवति। अत एव तत्र तदीयास्थिष्वपि पार्थिवभागस्याल्पतया तत् संक्षेपणे न नाम असम्भविता भवितुमर्हति।

अत एव प्रशस्तपादभाष्ये द्रव्यग्रन्थे जलनिरूपणे प्रोक्तम्—तत्र शरीरमयोनिजमेव वरुणलोके, पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। एवं तत्रैव तेजोनिरूपणे प्रोक्तम्—शरीरमयोनिजमेवादित्यलोके पार्थिवावयवोपष्टम्भाच्चोपभोगसमर्थम्। एवमेव तत्र वायुनिरूपणेऽपि प्रोक्तम्—तत्रायोनिजमेव शरीरं मरुतां लोके।

एवं न्यायदर्शनेऽपि स्वीकृतम्—तत्र मानुषं शरीरं पार्थिवम्,...आप्यतैजसवायव्यानि लोकान्तरे ( वरुण-सूर्य-वायुलोकेषु ) शरीराणि। तेष्वपि भूतसंयोगः पुरुषार्थतन्त्रः ( ३।१।२८ )। अयं भावः—एकभूतारब्धेन शरीरेण योगो न सम्भवतीति तेष्वपि शरीरेषु भूतचतुष्टययोगो भवति, प्राधान्यात्तु तैजसवायव्यादिव्यपदेशः।

तदेवमत्र सन्देहो न स्थितः। लौकिकानि वायुशकलानि ( वाईसीकल ) अन्यविधानि भवन्ति, सरकसस्य च तानि विशिष्टानि भवन्ति। अत एव सरकसस्थानि वायुशकलानि विविधचमत्कारपूर्णक्रीडाप्रदर्शने सफलानि जायन्ते, परं ताः क्रीडा अस्मदादिकवायुशकलानि कर्तुं न प्रभवन्ति। एवं लौकिकशरीरदिव्यशरीरयोर्भिदापि ज्ञेया। तेन तेऽन्तर्धानक्रियां कर्तुं प्रभवन्ति, अस्मदादयश्च न; तद् दिव्यशरीरवतां यमकिङ्करादीनां व्यक्तीभवनेऽन्तर्धाने च लेशतोऽपि संशीतिर्नावशिष्टा। तेषामस्थिषु विशिष्टतावशात् तेषां द्राघणा सङ्कोचश्च सम्भवकोटिमाटीकितुं शक्यत एव।

अवशिष्टा भवन्ति मनुष्ययोगिनस्तेषु यद्यपि पृथिवीबहुलतावशात् संङ्कोचविकाशादौ कठिनता दृश्यते; तथापि ते प्राणायामयोगाभ्याससमाधिप्रभृतियोगौपयिकक्रियावशात् तदुपयुक्तभोजनवशाच्चास्मदादिकविलक्षणशरीरवन्तो भवन्तु, नात्र कोऽपि संशीतिलवः। तेन तेऽपि शरीरस्य लघूकरणे द्राघणे च क्षमतावन्तो भवितुमर्हन्ति। अत एव तेषामस्थीन्यपि तादृंशि भवितुं शक्येरन्।

लवपुरीये डी. ए. वी. कालेजे १९२०-२१ ईशाब्दनिकटे एको योगाभ्यासी समागत आसीत्। स वक्ति स्म यद्—भवन्तो मां यदङ्गकृते कथयन्तु, अहं तत् स्थूलीकरिष्यामि। तदा कश्चिद् वक्ति स्म यद् भवता स्वबाहुः पीनः क्रियतामिति। तदा स शारीरिकवायुं बाहावेव केन्द्रीकरोति स्म, येन वायुव्याप्तस्तदीयो बाहुरतिशयितपीनतां बिभर्ति स्म, अङ्गान्तराणि च कृशिमवन्ति भवन्ति स्म। एवं स जङ्घादीन्यङ्गान्यप्यङ्गान्तरेभ्यः पीनतराण्यकरोत्।

एवमीदृशा बालका दृष्टाः स्युर्भवद्भिर्ये दश-द्वादश वर्षाणि यावत् कृशाः स्थिताः, ततोऽग्रे तेषां शरीरमतिशयितपीनतां द्राघिमाणं वाचकलत्। तत्र वायुपूर्णताकारणादेव तेषां तथात्वं जातम्। पुनश्च रोगादिवशेन स एव सम्भृतो वायुस्तदीयशरीरतः क्रमक्रमतो बहिर्याति, ततस्तेऽतिशयितकृशिमानमालिङ्गन्ति।

एवं योगिष्वपीयं शक्तिर्जायते यत् ते यदैवेच्छेयुस्तदैव बाह्यं पर्याप्तं वायुं स्वस्मिन् निगृह्य तेन स्वशरीरं पर्याप्तं विवर्धयेयुः। यदा चाभिलषेयुस्तं सम्भृतं वायुं क्रमक्रमतो बहिष्कृत्य यथा पूर्वतां बिभ्रेयुः। इयं शक्तिर्देवेषु जन्मनाऽऽयाति योगिषु त्वभ्यासेनेति विशेषः। हनूमांस्तु वातजातो वातावतार एवासीत्। तदा स स्वस्मिन्नीदृशं वायुं प्रपूरयति स्म यद् महाबलवान् भीमोऽपि तत्पुच्छं चालयितुं न शक्नोति स्म। यदा स तं वायुं बहिष्कुर्यात्, तदा स तनुतनुः सुरसामुखेऽपि प्रविशेत्। परं साधारणा अस्मदादिकजनास्तु स्वशरीरप्रकृतिपरतन्त्रा यदा तद्वशाद् वायुपरिपूर्णा भवन्तु, तदा स्थूला जायेरन्; यदा च ज्वरादिकारणान् स वायुः शनैः शनैस्तच्छरीरतो बहिर्व्यपगच्छेत्, तदा ते तनुतनुलताका भवन्तु। परमस्मदादिषु स्वतस्तथा न्यूनाधिकतायां स्थूलता सूक्ष्मतायां च सा शक्तिर्न भवति। अत एव अल्पश्रुताः पुराणवर्णितर्षिमुनिषु तथात्वं दृष्ट्वा शङ्कितुं तत्परा जायन्ते, परं तैस्तत्राचार्यशङ्करस्य ब्रह्मसूत्रभाष्यस्थमिदं वचनमवश्यमवधेयं यद् ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम्। तस्मात् समूलमितिहासपुराणम्...योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते प्रत्याख्यातुम् (१।३।३३)।

एवमाचार्येणेतः पूर्वं (१।३।३०) सूत्रभाष्येऽपि प्रोक्तम्—यद्यपि प्राकृता प्राणिनो न तद्व्यवहारमनुसन्दधाना दृश्यन्ते, तथापि न प्राकृतवदीश्वराणां भवितव्यम्। तथाहि—प्राणित्वाऽविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान् भवन् दृश्यते। तथा च मनुष्यादिषु हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवति—इत्येतत् श्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम्।

तदेवं देवानां तदवताराणां वाऽस्मद्विलक्षणसृष्टीनां प्रशस्तपादभाष्यशब्देनानपेक्ष्य शुक्रशोणितं धर्मविक्षेपसहितेभ्योऽणुभ्यो जातानामपि मुनीनामस्थीन्यप्यस्मदादिकवत् पृथिवीभागभूयिष्ठानि न भवन्ति येन तेषां कायसंक्षेपावसरेऽस्थिसंक्षेपे काठिन्यं स्यात्। तेन यमकिङ्करादीनामस्थिसंक्षेपणे शङ्काद्दृष्टिमन्तोऽल्पश्रुता अल्पविज्ञानज्ञानाश्च सिध्यन्ति।

तदेवमन्तर्धानसिद्धावपि तत्राणिमा सिद्धिरेव कारणम्। तदैव तु तादृशकृते योगदर्शने भगवता पतञ्जलिना प्रोक्तम्—'ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्मानभिघातश्च (३।४५)। अत्र भाष्ये श्रीव्यासेन प्रोक्तम्—'तत्राणिमा भवति अणुः ··· तद्धर्मानभिघातश्च शिलामप्यनुप्रविशतीति। तद्यद् यदा योगी अणिम्ना शिलामपि प्रविशति, तदा स स्वस्थूलास्थीन्यपि सूक्ष्माणि कुर्वीत—इति स्वाभाविकमेतत्। इमा अणिमाद्याः सिद्धयश्च वादिप्रतिवादिसम्प्रतिपन्नाः; तदा का नाम तव शङ्का भवितुमर्हेत्?

तदेवं जातेऽन्तर्धानमपि सिद्धमेव। इयमेवान्तर्धानसिद्धिस्तिरस्करिणीविद्यारूपेऽपि भवितुमर्हति। मेनकोर्वशीप्रभृतीनामप्सरसां सा प्रसिद्धा।

अन्तर्धानं विविधाभिर्विद्याभिर्भवति। प्रथममन्तर्धानं त्वणिम्ना भवतीति प्रतिपादितचरमेव। इदं वास्तविकमन्तर्धानम्। तदा दर्शकस्य पश्यत एव सोऽन्तर्धीयते। यथा सत्यनारायणव्रतकथायां वृद्धब्राह्मणरूपधारी भगवान् नारायणः शतानन्दस्य पश्यत एवान्तर्हित इत्यन्यदन्तर्धानं भवति परकीयदृष्टिप्रतिबन्धेन, तत्र स्वकीयसूक्ष्मताया आवश्यकता न जायते।

अयं दृष्टिप्रतिबन्धोऽपि बहुविधः। स्थूलतया च द्विविधः। तत्र प्रथमः प्रकारो मैस्मरेजमविद्याविशारदानाम्, तत्र तद्बलेन ते परस्येदृशं दृग्गतिबन्धं कुर्वन्ति येनास्माकमक्षिणी व्यभिचारिप्रत्यक्षं पश्यतः।

द्वितीयप्रकारोऽन्तर्धानस्य कस्यचिद् गैसस्य, धूमस्य, बाष्पस्य वा प्रसारणम्। जर्मनीदेशेनेदृशि वायुयानान्याविष्कृतानि। तत्र गैसबाष्पं वायुयानं परितः प्रसार्यते, येन तद् वायुयानं स्थितमपि न द्रष्टुं शक्यते। तत्र पाश्चात्त्येष्वियं शक्तिर्यन्त्रकारणादस्ति, परमस्मत्पूर्वजेषु तु तपोबलादासीदीदृशी शक्तिः। एतयैव शक्त्या पराशरेण मुनिना नीहार उत्पादितः, यदीयं वर्णनं महाभारते आदिपर्वणि त्रिषष्टितमेऽध्याये प्राप्यते।

अथवा ते योगिनः शुक्ले शुक्ला भूत्वा कृष्णे च कृष्णा भूत्वा तिष्ठन्ति, अत एव ते द्रष्टुं न शक्यन्ते। शुक्ले जलेऽन्यच्छुक्लं जलं मेल्येत, वयमुभयोः पार्थक्यं कर्तुं न शक्नुमः। अत एवाभिसारिकाः कृष्णरात्रौ कृष्णवासांसि वसाना ज्यौत्स्न्यां च शुक्लवासांसि वसाना एतदर्थमेव गच्छन्ति यद् वयं रात्रौ गच्छन्त्यः केनापि दृष्टा न भवेमेति। ताः सफला अपि भवन्ति। एतदीयं समर्थनमेकेन कविनापि सुप्रकारेण कृतम्, यद्यपि तत्कविप्रौढोक्तिमात्रम्। तथा च—

सुसितवसनालङ्काराणां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्या गतोस्तमभूद्विधुः।
तदनुभवतः ( राज्ञः ) कीर्तिः केनाप्यगीयत येन सा
प्रियमहमगान्मुक्ताशङ्का क नासि शुभप्रदः॥

अत्रामूर्तस्यापि यशसः शुभ्रत्ववर्णनं कवेर्यद्यपि प्रौढोक्तिमात्रम्; तथापि तस्य निष्कर्ष एष फलितो यत् शुक्ले शुक्लं वस्तु न दृश्यते। अत एवाभिसारिका शुक्लवस्त्रधारणेन ज्योत्स्नायां न प्रस्फुटिता।

एवमन्यकविनापीदृशं वर्णनं भ्रान्तिमदलङ्कारोदाहरणमुखेनोपन्यस्तं महान्तं चमत्कारमावहति। तथा च—

महाराज! श्रीमन्! जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते।
कपर्दी कैलासं करिवरमथायं कुलिशभृत्
कलानाथं राहुः कमलभवनो हंसमधुना॥

अत्र यशसः शुक्लत्वं प्रदर्श्य तत्प्रसरणेन श्वेतानां क्षीरसमुद्रकैलासैरावतादीनां प्रस्फुरणं नाभूत्; तेनैव ते ते पदार्था विष्णुशिवेन्द्रादिभिर्न प्राप्ताः। अत्रापि यद्यपि प्रौढोक्तिः, तथापि तया शुक्ले शुक्लं वस्त्वन्तर्हितं जायत इति प्रत्यक्षस्य प्रकाशः प्रतिपादितः। एवं योगिनामन्तर्धानविषयेऽपि विमृष्टुं शक्यते।

अस्मदीयो नायनो रश्मिः काचेन न व्याहन्यते; तस्य निर्मलत्वात्, परं कुड्येन व्याहन्यते; तस्य समलत्वादिति न्यायदर्शने सुप्रसिद्धम्। एवं योगिनोऽपि स्वप्रभावेण दर्शकानां दृष्टावीदृशीं भित्तिमापादयन्ति, येन ते ते पदार्थाः सन्तोऽपि तैस्तथात्वेन न दृश्यन्ते। एवमादिदिशाऽन्तर्धानविद्यासिद्धौ कापि बाधा नावतिष्ठते।

एवमुपपत्तिषु सतीष्वपि वयं वादिप्रतिवादिसंप्रतिपन्नस्य योगदर्शनस्यापि प्रमाणं समर्पयामः। तथाहि—कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशाऽसम्प्रयोगेऽन्तर्धानम् (३।२१)। अत्रान्तर्धानमपि योगविभूतिषु निर्दिष्टम्। तेनात्रासम्भवो न स्थितः। अत्रत्यं व्यासभाष्यमपि श्रोतव्यम्—कायरूपे संयमाद् रूपस्य या ग्राह्या शक्तिस्तां प्रतिबध्नाति स्तभ्नाति। चक्षुःप्रकाशाऽसम्प्रयोगेऽन्तर्धानमुत्पद्यते योगिनः। एतेन शब्दाद्यन्तर्धानमुक्तं वेदितव्यम्।

अत्र श्रीहरिहरानन्दारण्यकृतभास्वती—ग्राह्या ग्रहणयोग्या शक्तिस्तां प्रतिबध्नाति स्तभ्नाति। चक्षुःप्रकाशाऽसम्प्रयोगे चक्षुर्गतप्रकाशनशक्त्या सहासम्प्रयोगेऽन्तर्धानमदृश्यता।

अत्रैव श्रीवाचस्पतिमिश्रविरचिता तत्त्ववैशारदी—पञ्चात्मकः कायः। स च रूपवत्तया चाक्षुषो भवति। रूपेण हि कायश्च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिमनुभवति। तत्र यदा रूपे संयमविशेषो योगिना क्रियते, तदा रूपस्य ग्राह्यशक्ती रूपवत् कायप्रत्यक्षताहेतुः स्तभ्यते। तस्माद् ग्राह्यशक्तिस्तम्भे सत्यन्तर्धानं योगिनः। ततः परकीयचक्षुर्जनितेन प्रकाशेन ज्ञानेनासम्प्रयोगश्चक्षुर्ज्ञानाविषयत्वं योगिनः कायस्येति यावत्। तस्मिन् कर्तव्येऽन्तर्धानं कारणमित्यर्थः। 'एतेन' इति काये शब्दस्पर्शरसगन्धसंयमात् तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनाघ्राणप्रकाशाऽसम्प्रयोगे तदन्तर्धानमिति सूत्रमूहनीयम्।

उक्तमेव सूत्रं श्रीराघवानन्दसरस्वतीकृतम् 'पातञ्जलरहस्यम्' इत्थं व्याचष्टे—अन्तर्धानस्योपायमाह—कायेति। सूत्रं रूप्यते गृह्यते धर्मी येन धर्मेण तद्रूपं न तस्य

संयमकृतप्रतिबन्धे सत्यन्तर्धानं योगिनः सिध्यति। सुतरां रूपाऽग्रहे रूपवतोऽग्रहणं नक्तञ्चराणाम्, यथादित्यादेरग्रह इत्यर्थः।

उक्त एव सूत्रे श्रीविज्ञानभिक्षुनिर्मितं वार्त्तिकम्—'कायस्य स्वशरीरस्य रूपे संयमादशेषविशेषतः कारणादिभिः साक्षात्कृते सति सङ्कल्पमात्रेण स्वकीयरूपस्य दृश्यताशक्तिं परचक्षुःसंयोगयोग्यतां प्रतिबध्नाति। ततश्च परचक्षुःप्रकाशैस्तत्किरणैरसंयोगेऽन्तर्धानमुत्पद्यते योगिनः। दिनान्धेनेव केनाप्यसौ न दृश्यत इत्यर्थः। एतेन रूपान्तर्धानेन शास्त्रान्तरसिद्धं शब्दाद्यन्तर्धानमप्युपलक्षितं वेदितव्यमित्यर्थः। यदा कायस्य शब्दस्पर्शरसगन्धसंयमात् तेषां ग्राह्यशक्तिस्तम्भो भवति, तदा श्रोत्रादिसन्निकर्षे प्रतिबन्धाद् योगिनः शब्दादिकं बधिरेणेव केनापि न श्रूयत इति भावः।

एवं टीकाचतुष्टयेन न केवलं रूपान्तर्धानविषये; प्रत्युत रूपरसगन्धस्पर्शशब्दानामपि योगिसम्बन्धिनामन्तर्धानविषये सम्यक् प्रकाशो जातः। एवं योगदर्शनं तदीयव्यासभाष्यं च वादिप्रतिवादिसम्प्रतिपन्नमक्षरशः सत्यं क्रियात्मकमनुभवसिद्धं च शास्त्रमस्ति। तेन तत्र वर्णिताऽन्तर्धानसिद्धिरपि क्रियात्मिका सिद्धा। ततश्च पर्वताकृतिका यमकिङ्करा दृश्यन्ते कथं नेति केषाञ्चिदाक्षेपः प्रत्युक्तः। तत्रान्तर्धानक्रियायोग ऊह्यः। यतो हि देवेषु दैत्येषु चान्तर्धानक्रिया स्वभावत एव भवति। ते दीर्घा अपि द्रष्टुं न शक्याः। योगिनोऽन्तर्धानसिद्धिवशादस्माकं दृष्टिमित्थं न्यूनां कुर्वते स्वतिरस्करिणीविद्यया, येन वयं तं स्थितं गच्छन्तं वापि द्रष्टुं न शक्नुमः। अत एव योगदर्शने (३।४५) सूत्रस्य व्यासभाष्ये प्रोक्तम्—अनावरणात्मकेऽप्याकाशे भवत्यावृतकायः, सिद्धानामप्यदृश्यो भवति।

एवं मण्डूकविष्टादिनिर्मितान्यञ्जनान्यपि श्रूयन्ते; तेषां नेत्रे धारणेन सर्वत्र सर्पा एवाक्षिलक्ष्यीभवन्ति। ऐन्द्रजालिकास्तदुपयोगप्रवीणा भवन्ति। एवमीदृशि लोपाञ्जनान्यपि श्रूयन्ते, यद्धारणेन तं समक्षस्थमपि द्रष्टुं न शक्नुवन्ति जनाः, परं कालक्रमात् स्वार्थे प्रवृद्धे कामुकतायां च प्रवृद्धायां पात्राभावात् तास्ता विद्या "नैवेमामिरिणे वपेत्" इति मनूक्त्या गुरुभिर्मुखात् शिष्येभ्यो न दीयन्ते स्मेति विविधविद्यानां लोपोऽजायत। यदि चित्तशक्तिर्वर्ध्येत तपो योगश्च

वर्ध्येत, तदा परकीयदृष्ट्यवष्टम्भं कृत्वा ऐन्द्रजालिकवद् अन्तर्धाने साफल्यमपि प्राप्तुं शक्यते।

## मन्त्रादीनां प्रभावः

मन्त्रादीनां प्रभावविषये इतस्ततः सङ्कलय्य प्रतिपाद्यते। प्रत्येक-विशिष्टशब्दः स्वात्मन्येकां विशिष्टतां निधत्ते, अत एव वैदिकशब्दानां स्वकीय-विशिष्टताकारणात् तदीयानुपूर्व्यां परिवर्तनं न क्रियते। यतो हि तयैवानुपूर्व्या उच्चारणेन लाभविशेषो जायते। तस्या एव आनुपूर्व्या मेघेष्वपि प्रभावो जायते, येन वृष्टिर्भवति। सूर्यादिदेवेष्वपि तत्प्रभावो जायते, येन ते प्रसन्नाः सन्तोऽस्मदिष्ट-पूर्तिं विदधति।

फ्रांसदेशस्य प्रसिद्धा वैज्ञानिकमहिला मै-उमफिनेलाङ्कनाम्नी अवर्तत। तया शब्दविषये पर्याप्ता अनुभवाः कृताः। एकदा विशिष्टानुभवाय सा विद्युत्तन्त्रीमेकत्र योजितवती। सहैव एकं कृष्णफलकं तत्र क्षारम् ( चाक का टुकड़ा ) अपि चाऽ-वध्नात्। निकट एवैकस्मिन् वेत्रासने उपविश्य सा गातुमुपचक्रमे। किञ्चित्समयोत्तरं मुखमूर्ध्वीकृत्य साऽपश्यत्, व्यस्मेष्ट च। तस्मिन् कृष्णफलके कतिचिद् रेखा अबोभूयन्त। सा वस्त्रखण्डेन फलकममार्ट्।

पुनः सा स्वप्रेमिविषयेऽगायत्। तयाऽवालोकि यत् तेन स्वरेण विद्युत्तन्त्रीषु कम्पनं जायमानमस्ति, तस्मिंश्च कृष्णफलके आकृतिविशेषो निर्मीयते। इदं ज्ञात्वा सा प्रासीदद् यत्—शब्दानामाभ्यन्तरिकभावेन गभीरोऽस्ति सम्बन्धः। इदं प्रत्यक्षमेव यद् मृगादयः सर्पाश्चापि गाने वेणुध्वनौ वा मत्ता भूत्वा घूर्णन्ते। युद्धेषु विशिष्ट-गानेनाश्वेष्वप्यावेशो जायते, ते च कूर्दमाना युद्धेष्वग्रसरा भवन्ति।

सैव रमणी पैरिसमहाविद्यालयपाठिनं कमपि वङ्गीयच्छात्रं गातुं प्रैरिरत्। स च भैरवाष्टकमगायत्। तेन कृष्णफलके भैरवस्येव मूर्तिर्निरमीयत। एतेन स्पष्टं यत् साधारणशब्दपाठेऽपि शक्तिविशेषोऽस्ति, तदा विशिष्टानुपूर्वीशालिनां वेदमन्त्राणां पाठे तु विशेषो भवेदत्र नाश्चर्यम्।

वेदस्याक्षरेऽक्षरे वैशिष्ट्यं वर्तते, अत एव वेदा नियतानुपूर्वीमन्तो नियत-पदप्रयोगपरिपाटीमन्तश्च मन्त्रकोपा मन्यन्ते। लोके त्वाहर पात्रम्, पात्रमाहर—इति

आनुपूर्वीभेदे स्वातन्त्र्यम्, परं वेदमन्त्रे आनुपूर्वीभेदो न क्रियते। यदि क्रियेत, तर्हि तत्र मान्त्रिकशक्तिर्न तिष्ठति। स मन्त्र ईश्वरीयो न भूत्वा मानुषो जायते। अत एव मन्त्राणां वैधजपनेऽपि फलं कथं न भवेत्? तदैव तु मन्त्रसंस्कृता अन्यदीया कन्या एकस्य पत्नी जायते। तद् वेदे विविधमनोरथपूरकैर्मन्त्रैर्भाव्यमेव। परं तत्र प्रयोग-नैपुण्यम्, शुद्धपाठः, शुद्धः स्वरः, श्रद्धा, विश्वासश्च इष्यन्ते, तदैव फलप्राप्तिर्भवेत्।

मन्त्राणां सस्वरमुच्चारणद्वारा भौतिकतत्त्वेषु भौतिकजगति च तथा मान्त्रिक-देवतायामपि प्रभावः पातयितुं शक्य एव। ता देवता वशीकर्तुमपि शक्याः। वेद-मन्त्राणां शुद्धसस्वरपाठेन तत्क्रियाद्वारा चाग्निजलवायुमेघविद्युदादितत्त्वानां विविधोपयोगः कर्तुं शक्यः। प्राचीनकाले दिव्यदृशो महर्षयो मन्त्रसम्बन्धिविज्ञानस्या-न्वेषणे सुदीर्घं ब्रह्मचर्यं चरित्वा तत्र जीवनमप्यर्पयन्ति स्म।

अद्यत्वे विविधमन्त्रज्ञातारः प्राप्यन्ते, ते तत्तत्कर्मसु साफल्यमासीदन्तोऽपि दृश्यन्ते; परं तत्र श्रद्धा विश्वासोऽपि चेष्यते। यदा किलासंस्कृतेष्वपि सर्प-वृश्चिकादीनां मन्त्रेषु श्रद्धाविश्वासादिना साफल्यं दृश्यते, ततो वेदमन्त्राणामपि पूर्णश्रद्धया प्रयोगे साफल्यमाशास्यते। योगदर्शने प्रोक्तम्—'जन्मौषधिमन्त्रतपः-समाधिजाः सिद्धयः' (४।१)। अयमाशयो यत् कतिचित् सिद्धयो जन्मनैव भवन्ति; यथा महिषीसुता जातमात्रा एव जले तरन्तो दृश्यन्ते। देवा जन्मत एव विद्वांसोऽ-णिमादियुक्ताश्च भवन्ति। कतिचिदजरामरताश्च सिद्धयः रसायनाद्यौषधिद्वारा प्राप्यन्ते। कतिचित् सिद्धयश्च मन्त्रैर्भवन्ति, कतिचिच्च तपसा, कतिचन च समाधि-द्वारा। योगिनां चाकाशगमनादिसिद्धिः समाधिद्वारा प्राप्यते।

मन्त्रसिद्धिविषये चेदं ज्ञेयं यद् मन्त्रः शब्दात्मको भवति। शब्देऽचिन्त्या शक्तिर्वर्तते। वैरम्, प्रेम, क्रोधः, शान्तिः, कार्यसिद्धिर्विविधक्रान्तयश्च शब्दशक्ति-द्वारैव जायन्ते। शब्दानां क्रमविशेष एव सङ्गीतं भवति, येन पशुपक्षिणोऽपि प्रभाविता जायन्ते। मन्त्रशास्त्रमपि शब्दक्रम एव निर्भरम्। कतीनाञ्चन क्रियाणां मन्त्रेण विधाने विशिष्टः प्रभावो जञ्जन्यते, तेषामेव मन्त्राणां संग्रहो मन्त्रभागो वेदनाम्ना प्रसिद्धः। उपवेदे आयुर्वेदेऽपि मन्त्रा भवन्ति, एवं तन्त्रशास्त्रेऽपि। मन्त्रशक्त्यैव पुरा ब्राह्मणा वेदिविधायने तद्रोधे वा शेकुरिति प्रसिद्धम्। एवं मन्त्रैः सह विशिष्ट-

बीजमन्त्राणामपि संयोगेन शक्तिविशेषः प्रादुर्भावयितुं शक्यते। यदि स्वरवर्णादेरानुपूर्वीभङ्गः क्रियेत, तत्तदीयफलेऽपि भङ्गो जायते। अत एव सुप्रसिद्धमेतत्—

मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥
(पाणिनीयशिक्षायाम्)।

प्रत्येकमन्त्रः कतिचिन्नियतध्वनीनां समूहो भवति। मन्त्रेऽर्थविचारो न कर्तव्यो भवति, अन्यथा तदुच्चारणे न्यूनता तिष्ठति। कौत्समुनिर्यद् मन्त्राणामानर्थक्यं मनुते स्म, तस्य नैषोऽभिप्रायो वर्तते यद् मन्त्राणामर्था एव न भवन्तीति; तदीय एष भावो यद् मन्त्रेषूच्चारणवशाच्छब्दस्यैव महत्वं भवति। दंशसर्पादीनां मन्त्रा यद्यनुसन्धीयेरन्, तत्तत्र कोऽप्यर्थविशेषो न दृश्यते, परं तदीयो ध्वनिः सर्पवृश्चिकादिदंशे प्रभावं पातयति। एवमृषिभिरपि तादृशध्वनीनां समूहो मन्त्रभागः समाधिद्वारा दृष्टः। तत्प्रयोक्तारो यदि लभ्येरन्, तद् विनैव बाह्योपकरणं कार्याणि सिध्येयुः। 'याज्ञे कर्मणि प्रयोगनियमः' इति महाभाष्यकारकथनाद् यज्ञकर्मणि अर्थज्ञानस्य नियमो न भवति, किन्तु तच्छब्दस्य प्रयोगमात्रस्य नियमो भवति। विवाहसंस्कारस्य मन्त्राणां शब्दैः कन्या संस्कृता भवति, न तदनुवादेन। अत एव काव्यप्रकाशे वेदः शब्दप्रधानो मतः। अर्थे ध्यानेन शब्दस्य शक्तिर्हन्यते। अत एव यदा वयं छात्रस्य कस्यचित् प्रस्तावं शृण्वन्तो भवामः, तदा यदि तस्यार्थेऽवदध्मः, तदा तदीया शब्दत्रुटिर्न शोधयितुं शक्यतेऽस्माभिः। अत एव महाभाष्ये प्रोक्तम्—'यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्ति।'

पुत्रेष्टियज्ञे स्त्रीणां गर्भाशयोपर्यपि मन्त्राणां प्रभावो जायते, येन तत्र शुक्रं स्थिरीभूतं सत् सन्ततिरूपे परिणमते। वेदस्य मन्त्राः स्वयम्भूवचनवशात् साक्षात् फलशालिनो भवन्ति। पुराणानां तन्त्राणामपि च मन्त्रा अनादिकालात् प्रचलिताः सन्ति, वेदानुसारित्वात् तेऽपि वेदसदृशं फलं निदधति। कतिपये मन्त्रा भिन्ना अपि भवन्ति, तत्राविष्कर्तॄणां तपोबलात् ते फलदायका भवन्ति। तत् तेषां तपस्या यावत्कालावस्थायिनी तिष्ठेत्, ते मन्त्रा अपि तावत् सफलाः स्युः, तदुत्तरं ते निष्फलतां प्रपद्येरन्; परं वेदमन्त्राः सदैव सफला भवन्ति। परं तदीयप्रयोक्तृभिरधिकारिभि-

निष्ठावद्भिः शुद्धोच्चारणवद्भिश्च भाव्यम्। एवं याज्ञिकमन्त्रवशीकृता दैवशक्तिरप्यस्माननुगृह्णाति । सा ह्युच्चयोनित्ववशाल्लोकोत्तरबलशालितावशाच्चास्मान् स्वमनोरथपूर्तौ सुगमं प्रबोधं दत्ते। तन्मन्त्रप्रकम्पनानां प्रभावस्यास्माकीनशरीरे सत्त्वात् तानि प्रकम्पनान्यास्माकीनरोगपरमाणूनां बहिष्करणेऽपि क्षमतां दधति। मानसिके शारीरिके चास्वास्थ्ये दूरीभूते लोककल्याणं स्वयमुपतिष्ठेत।

मन्त्रसिद्धौ जातायां वाक्सिद्धिर्जायते। वाक्सिद्ध्या च वरशापदाने शक्तिर्जायते। तत्र तपस्यापि कारणतां वहति। तपःशक्तिर्मनुस्मृतौ प्रोक्ता—

यद् दुस्तरं यद् दुरापं यद् दुर्गं यच्च दुष्करम्।
सर्वं तत् तपसा साध्यं तपो हि दुरतिक्रमम्॥

(११।२३८)

अत एव तापसस्य विश्वामित्रस्य 'गाधा भवत' इति कथनमात्रेणैव नद्योऽल्पजलाः संवृत्ताः। अद्यत्वे शापशक्तिः कथं नष्टेत्यनुयुक्तः कोऽपि ब्राह्मण उदतरत्—

परान्नेन मुखं दग्धं हस्तौ दग्धौ प्रतिग्रहात्।
परस्त्रीभिर्मनो दग्धं कुतः शापः कलौ युगे॥

एवमेतद्विपरीता वरप्रदानशक्तिरप्यद्यत्वे न दृश्यते। तादृग्वाक्शक्तावपि तप एव कारणम्।

गुरोर्लघुत्वापादनं लघोश्च गुरुत्वापादनं वायुसम्भरणनिर्गमनवशात्। तत्र मनोबलस्येच्छाशक्तेरपि च प्राबल्यं ज्ञेयम्। अणिममहिमगरिमलघिमसिद्धीनां वर्णनं कृतमेव। तदत्राप्यनुसन्धातुं शक्यते।

एतादृशशक्तीनामधिगमाय योगशास्त्रस्याधिकारिणो गुरवोऽपेक्ष्यन्ते। प्राग् योगक्रियाभिः शरीरशुद्धिर्विधेया भवेत्। प्राक्तनाः सर्वाङ्गानां शुद्धिं कुर्वन्तोऽन्त्राण्यपि शोधयन्ति स्म। ततो भोजनमपि योगशास्त्रानुसारं सात्त्विकं विधेयं भवेत्। अत्र प्राणायामे विशिष्टाभ्यासो विधेलिमो भवेत्। प्राणायामे शारीरिकवायो रेचनं समापूरणं च विशिष्टतया विधेयं भवेत्। एवंविधक्रियासु ये संशक्ताः स्युः, राजा प्रजा च तेषां योगक्षेमपूरणेऽवदध्युः, तदा तेषामुत्साहप्रवर्धनं स्यात्। एवं विद्यावृद्धिर्भवितुमर्हति। परमेतद्विद्याया उपयोगः परोपकृतावेव यदि स्यात्, तदा तु युक्तं भवेत्।

एतद् ध्येयं यद् यत्कार्यं प्राग् योगिनो विदधति स्म, तदेव कार्यमद्यत्वे वैज्ञानिका आधिभौतिकयन्त्रैर्विदधति। परं यान्त्रिकयुगानुसारेण नास्तिकता। परस्परं प्रतिद्वन्द्विता कलहाश्च प्रवर्धन्ते, यौगिकशक्त्यनुसारेण त्वाध्यात्मिकबलस्योन्नतिरास्तिकता परोपकारपरायणता च वरीवृध्यते। परमेतद्विद्यापरिचिता विद्वांसो गवेषणीयाः स्युः। एवं सति यत् खल्वद्यत्वे पौराणिकचमत्कारेषु जना असम्भवशब्दस्य प्रयोगं वितन्वते; स आक्षेपः सम्यक् परिह्रियेत॥



# शापस्तत्प्रभावश्च

डा० वी० वरदाचारी, वेङ्कटेश्वरविश्वविद्यालयः, तिरुपतिः ।

शापो नाम विरुद्धानुध्यानम् । कस्यचित् पुरुषस्य स्वेच्छमाचरतः प्रतिबन्धितया य आक्रोशः प्रयुज्यते, स शाप इत्यर्थः । तादृशस्यानियन्त्रितस्याचारस्य दोषो वा वैगुण्यं वा पुरुषगतं निमित्तभूतमित्यवगम्यते । एवमाचारोऽप्रतिहतगतिर्यदि स्यात्, तर्हि न केवलमात्मानं परं त्वन्यानप्युत्पथं प्रापय्य लोकस्य हानिमावहेत् । लोकक्षेमाय तादृशाः पुरुषाः शास्त्रवश्यैः सन्मार्गं प्रतिपन्नैः शिष्टैर्विनेतव्या भवन्ति । सामोपायं प्रयुञ्जानैः कृपालुभिरेतैः साधुभिः 'उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये' इति न्यायेन पुरुषा एते न वशीकृता भवन्तीति साधुचरितश्रवणकुतूहलिनां सुविदितमेव । मानववर्गदुःखप्रहाणेच्छया प्रचोदितास्त्वेते साधव एतैः प्रदर्श्यमानाधिक्षेपमप्यविगणय्य तान् सत्पथं प्रापयितुं यतन्ते । निसर्गतः शान्ता अपि स्वेनोदीरितं पथ्यमपि वचनमप्रतिपद्य हठात् प्रवर्तमानेषु तादृशेषु पुरुषेषु, तेषामसदाचारादाकोपिताः सन्तः शापवचनमेव तेषु पातयन्ति । प्रायः शप्यमानाः 'यूयं म्रियध्वम्' इति शप्ता नोच्यन्ते, यतस्तथाचरन्तः शप्तारः परविपत्तिप्रेक्षा इति वचनीया भवेयुः । एतावन्तं कालमिमामवस्थां प्रतिपद्यस्वेति तेषामाचरणानुरूपानुभवप्रदायिनीमवस्थां निर्दिश्य कालविशेषे स्वावस्था उपेया इति शापावसानकालविध्यादींश्चादिशन्ति ।

समभिक्रुद्धेन येन केनाप्युदीरितं वचो नियमेन शप्यमानेषु सार्थतां न वहति । जितेन्द्रियस्यैव शप्तुर्वाग्विपर्यासविप्रलिप्साविरहिताऽविपरीतार्था भवति, जितमनस्कस्य च प्रमादोन्मादवियुक्ता सप्रयोजना च संपद्यते । निगृहीतकरणत्रितया एतेऽस्थाने कुपिता न भवन्ति, निमित्ते आपतिते च शापवाचमुदीरयन्ति, शापवचोऽपि सिद्धिं प्राप्नोतीत्यवगम्यते ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥

( भ० गी० १७।१४-१६ )

इति त्रिविधं तपस्यन्त एते कुमार्गप्रस्थितानपि शपन्तः—

आक्रुश्यमानो नाक्रुश्येद् मन्युरेनं तितिक्षतः।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥

( महा० शान्ति० १००।१६ )

इति वचनसामर्थ्याद् गर्ह्या भवेयुरसाधव एव चेति न वाच्यम्, यतश्छात्रान् शासनार्हान् दण्डयन्तः किल्बिषेण परोद्वेगावहेन न लिप्यन्ते; प्रत्युत तानदण्डयन्तो पापभाजो भवेयुः। दण्ड्यानदण्डयन् नृपः

दण्डो हि सुमहत्तेजो दुर्धरश्चाकृतात्मभिः।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥

इति ( महाभारते शान्तिपर्वणि १००-२८ ) न्यायेन यथा विनश्यतीत्यभ्युपेतम्, तथायमेव न्यायः शप्तरि प्रवर्तत इत्यभ्युपगमनीयम्।

चित्तवृत्तिं निरुन्धाना एतेऽणिमादिसिद्धीः प्राप्य स्वमन्यं च वशीकुर्वन्ति। स्वस्येवान्येषामपि चित्तवृत्तीरात्मेच्छानुरूपं निरोद्धुं चेशते। तदा भूतप्रकृतयस्तेषां सङ्कल्पमनुविदधति। तथाहि—

"तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति। तत्र पञ्चभूतस्वरूपाणि जित्वा भूतजयो भवति, तज्जयाद् वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्तीति" ( व्यासकृते योगभाष्येऽध्यायः ३, सूत्रम् ४४ )। अत एव यथा शप्ताऽभिसन्दधाति तथा शापभागन्य एवाभिजायते।

शापभाजस्तु परित्याजितरूपस्थानाधिकारादयोऽवस्थान्तरं प्रतिपद्यन्ते। तेषु केचनानुगतपूर्वावस्थास्मृतिप्रवाहाः शप्तावस्थायामपि भवन्ति, शापनिवृत्तिमपेक्षमाणाः समीचीनमाचारं यथास्वरूपमातिष्ठन्ते च। अन्ये च तस्यामवस्थायां विस्मृतपूर्ववृत्ताः शापनिवृत्तौ शापनिमित्तं सर्वं ततः पूर्वं वृत्तजातं स्मरन्ति। शप्ताः सर्वे शापावसाने नैजं वपुरादिकं स्वीकुर्वते।

प्रायेण शापभाजो मनुष्या एव। शापवशात् तेषां वपुरादिषु धर्मान्तरोत्पत्तिः सञ्जायते। कदाचिद् जात्यन्तरविशिष्टशरीराण्येतेऽध्यासते। एतादृशं विपरिणामं कथं मनुष्यशरीरं भजत इति विचारः प्रवर्तते। एष विचारः सांख्यमतावलम्बिनो सत्कार्यवादः परिणामवाद इति कार्यकारणसंबन्धनिरूपकसिद्धान्तावाश्रित्य प्रवर्तते। कारणं प्रकृतिः, कार्यं वस्तुजातं जगति परिदृश्यमानम्। जगत्यपि वस्तुषु कानि च कारणानि, अन्यानि कार्याणि; कार्यमपि वस्तु कारणं भवत्यन्येषां कार्याणाम्। अत्र सदेव कारणं कार्यात्मना परिणमत इति सत्कार्यपरिणामप्रकारो दृश्यते। कारणात् कार्यमनन्यत्। सर्वेषु प्रकारेष्वभेद एव व्यवस्थितः, भेदस्तु नाममात्रेण। यथा—कारणस्य नाम मृत्, कार्यस्य च घट इति। कार्यं कारणात्मकमेव। कार्ये विद्यमाना गुणाः कारणादेव प्रजायन्ते। अनेन कार्यभूतं जगत्सर्वं कारणभूतप्रकृत्यात्मकमेवेति सिद्ध्यति। अर्थात् सर्वं सर्वात्मकमिति सिद्धान्तमवलम्ब्य शापेन प्रयुक्तो विपरिणामो बोद्धव्यो भवति। तथा चाह व्यासो योगभाष्ये—"सर्वं सर्वात्मकम्" इति। यत्रोक्तम्—जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम्, तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेष्विति, एवं जात्यनुच्छेदेन सर्वं सर्वात्मकमिति देशकालाकारनिमित्तसंबन्धान्न खलु समानकालमात्मनामभिव्यक्तिरिति (अध्यायः ३, सू० १४.)। अतो मनुष्यशरीरस्य सर्पशरीरत्वेन, अन्यस्य यस्य कस्यचिज्जन्तोः शरीरत्वेन वा विपरिणामः शापकृतः सुसमाध एव।

अपि च, शापकालात् पूर्वमनन्तरं शप्तावस्थायां च शरीरे विद्यमान आत्मा स्वेनैव रूपेणावतिष्ठते। शापकृता परिवृत्तिर्देहस्यैव। शापस्य निमित्तं तु शापपात्रभूतेनात्मना कृतं पुण्यपापजातमेव। तादृशकर्मफलभोगानुभवस्तु तदनुभवावहे शरीरे स्थितस्यैवात्मनः सम्पद्यते। यथा कर्मोपभोगार्थं प्रतिजन्म आत्मा शरीरान्तरं विजातीयमपि प्रतिपद्यते, तद्वत् स्वकर्मफलोपभोगार्थं शापवशाज्जनितं शरीरान्तरं जीव एकस्मिन्नेव जन्मन्यध्यास्ते। नात्र काचिदनुपपत्तिः। यथानेकजन्मसु परिगृहीतशरीराणां प्रकृतिविकारभूतानां जात्येकनियतत्वं न संभाव्यम्, तद्वच्छापवचसा प्रापितेन शरीरेण पूर्वशरीरस्य सजातीयेन भाव्यमिति नायं नियमः। कर्मोपभोगार्थमात्मना शापवशाद्वा गृह्यमाणमुपकरणं शरीरमिति विप्रतिपत्तिर्न काचिदवकाशमत्र लभते।

एतद्विवरणार्थं कानिचनेतिवृत्तानि संक्षेपतोऽत्र विमृश्यन्ते। इक्ष्वाकुकुलवर्धनस्त्रिशङ्कुनामा महाराजो मनुष्यदेहेन दिवमारुरुक्षुः कुलगुरुं वसिष्ठमुपेत्य तं स्वाभीष्टनिष्पादनमयाचत। तन्न शक्यमिति गुरुणा निराकृतप्रार्थनः स राजा दीर्घतपसो वासिष्ठानासाद्य यथावृत्तं निवेदयामास, ममाभीष्टसिद्ध्यर्थं याजयन्तु भवन्त इति व्यजिज्ञपच्च। पितृपादैर्या प्रार्थना निराकृता तामेवास्माभिरनुष्ठेयेति यद्वदसि तत्त्वं दुर्मेधा बालिश इति व्यञ्जयति, अस्माभिरेवं कर्तुं न युज्यत इति व्याहृतवतस्तान् नरपतिः 'अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः' इति घोरं वच उदीरयामास। वाक्यमेतन्निशम्य तपस्विनस्ते परमसंक्रुद्धाः 'चण्डालत्वं गमिष्यसि' इति तं शेपुः। प्रासादमुपगतो राजा परस्मिन्नहनि चण्डालः संवृत्तः। तथाहि—

नीलवस्त्रधरो नीलः परुषो ध्वस्तमूर्धजः।
चित्यमाल्याङ्गरागश्च आयसाभरणोऽभवत्॥

( रामा० बालकाण्डे ५८।१०।११ )

अत्र जितेन्द्रिया वासिष्ठा अवितथवचनाः शापदाने गुरुत्वाधिकारं वहन्तः सर्वथाधिकारिणः। अत एव तेषामिच्छा त्रिशङ्कोश्चण्डालत्वप्राप्तयेऽवाकल्पत। राजा तु प्रथमम्—

गुरुपुत्रानृते सर्वान्नाहं पश्यामि कांश्चन।
इक्ष्वाकूणां हि सर्वेषां पुरोधाः परमा गतिः॥
तस्मादनन्तरं सर्वे भवन्तो दैवतं मम। इति।

( रामा० बालकाण्डे ५७।२१-२२ )

स्वस्य गुरुपुत्रशेषत्वमभिधाय तैः प्रत्याख्यातप्रार्थनः "अन्यां गतिं गमिष्यामि स्वस्ति वोऽस्तु तपोधनाः' इति स्वस्य विधेयत्वं तेषु निराचकार। वाक्ययोरनयोः परस्परं विरोधं प्रदर्शयन् राजा गुरुपुत्रेभ्योऽपाराध्यत्। अतस्ते तमभिक्रुद्धाः शेपुः। राज्ञः शरीरेऽवस्थितेऽपि तत्रस्था धर्मा रूपादयो भूषणादयश्च चाण्डालत्वद्योतका तत्राविरभवन्। अप्रमुषितस्मृतिकस्य राज्ञः परिवृत्तिरियं परिणामरूपैव। असाध्ये कर्मणि प्रवृत्तिमीप्सन्नन्यान् याजकान् पीडयेत्; अस्मभ्योऽवमाननावहोऽसाविति कृत्वा सर्वकर्मस्वनधिकारापादकेन चण्डालत्वेन मुनिपुत्रास्तं योजयामासुः।

भूतप्रकृतीर्विजित्य तपस्यतामेषां शापवचसा परिवृत्तिस्त्रिशङ्कोरजायत इति युज्यत एव ।

महात्मा गौतमो जायया अहल्यया तपस्तेपे । कामुको महेन्द्रस्तामुपससाद । देवराजकुतूहलात् सा दुर्मेधा भूत्वा तेन संगता । उपलभ्यैतद् गौतमः 'अकर्तव्यमिदं त्वया कृतम्, विफलस्त्वं भविष्यसि ।' ( रामा० बालकाण्डे ४८ ।२७ ) इति तं शशाप । झटिति निर्वीर्यः स जातः । जायां विलोक्य,

इह वर्षसहस्राणि बहूनि निवसिष्यसि ।
वातभक्षा निराहारा तप्यन्ती भस्मशायिनी ।।
अदृश्या सर्वभूतानामाश्रमेऽस्मिन् वसिष्यसि ।
यदा चैतद्वनं घोरं रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ।।
तस्यातिथ्येन दुर्वृत्ते लोभमोहविवर्जिता ।
मत्सकाशं मुदा युक्ता स्वं वपुर्धारयिष्यसि ।।
एवमुक्त्वा महातेजा गौतमो दुष्टचारिणीम् ।
इममाश्रममुत्सृज्य सिद्धचारणसेविते ।।
हिमवच्छिखरे रम्ये तपस्तेपे महातपाः ।

( रामा० बालकाण्डे ४८।२९-३४ )

आगतं देवराजं विदित्वापि तेन संगममीप्सन्ती गौतमपत्नी भ्रष्टचारित्रा समजायत । संगं प्राप्य साधुपदवीतो दूरतो व्यपेता दुर्मेधा इति वाल्मीकिना साधु निर्दिष्टा । अभ्यवहारं विना तया आत्मा धार्यः । श्वासमात्रपरया भवितव्यम् । भस्मस्वर्थादविमृष्टे भूतल एव शयनं विहितम् । यतः सा पांसुला संजाता, अतः परिशुद्ध्यर्थं तया परेषां दर्शनपथादपेतया भवितव्यम् , तया तपश्चानुष्ठेयम् । एवं शापप्रकारो दर्शितः । आगस्कृत् सा शापदानेनैव दण्ड्या बभूव । शासनविधिस्तु विविधैः पदप्रयोगैर्दर्शितः । शापावसानपर्यन्तं तया तप आस्थेयः । इदं तपस्यन्ती, आश्रमेऽस्मिन् वसिष्यसीति पदैर्व्यज्यते । 'अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थित-विषयजाला चाशुद्धिर्नान्तरेण तपःसम्भेदमापद्यते' इति व्यासेन योगभाष्ये प्रदर्शितम् ( योगभाष्ये द्वितीयाध्याये प्रथमसूत्रे ) । यदा श्रीरामस्तमाश्रमं प्रवेक्ष्यति, तदा

तस्य पूजा तया आचरणीया। तदन्तरमेव दुर्वृत्तायास्तपस्यन्त्यापि लोभमोहाभ्यां वियोगप्राप्तिः। तदनन्तरं सा पूता भविष्यतीति शापावसानप्रकारोऽपि मुनिना तेन विहितः। शापानुरूपं सा परेषां विश्वामित्रादीनामपि दर्शनपथं नायाता। शापविनिर्मुक्तिमेवं वर्णयति कविः—

विश्वामित्रवचः श्रुत्वा राघवः सहलक्ष्मणः।
विश्वामित्रं पुरस्कृत्य तमाश्रममथाविशत्॥
ददर्श च महाभागां तपसा द्योतितप्रभाम्।
लोकैरपि समागम्य दुर्निरीक्षां सुरासुरैः॥
सा हि गौतमवाक्येन दुर्निरीक्ष्या बभूव ह।
त्रयाणामपि लोकानां यावद्रामस्य दर्शनम्॥
शापस्यान्तमुपागम्य तेषां दर्शनमागता।
राघवौ तु ततस्तस्याः पादौ जगृहतुस्तदा॥
स्मरन्ती गौतमवचः प्रतिजग्राह सा च तौ।
पाद्यमर्घ्यं तथातिथ्यं चकार सुसमाहिता॥
प्रतिजग्राह काकुत्स्थो विधिदृष्टेन कर्मणा।
साधु साध्विति देवास्तामहल्यां समपूजयन्॥
तपोबलविशुद्धाङ्गीं गौतमस्य वशानुगाम्।
गौतमोऽपि महातेजा अहल्यासहितः सुखी॥
रामं संपूज्य विधिवत्तपस्तेपे महातपाः।

( रामा० बालकाण्डे ४९।१४-१५, १८-२४ )

तपोबलेन जितेन्द्रियत्वादविपरीतार्थवचसा च गौतमः स्वजायाया मनोवृत्तेः पुनश्चलनं निवारयिष्यन् तां परेषामदृश्यामकरोत्। शापानुभवकाले तस्याश्चैतन्यप्रच्युतिर्नासीत्। जितभूतस्य गौतमस्य प्रभावः शापरूपात्मना व्यञ्जितोऽभूत्।

अस्मिन्नितिवृत्ते पाद्मपुराणोक्ते कश्चन विशेषः संलक्ष्यते। तत्र चैवं वर्णिता शापकथा—

गच्छतस्तस्य रामस्य पादाब्जेन महात्मनः।
अभूत् सा पावनीभूता समाक्रान्ता महाशिला॥

सापि शप्ता पुरा भर्त्रा गौतमेन द्विजन्मना ।
( पद्मपुराणम् ६।२६९।१३३-१३४ )

अत्र गौतमेनाहल्या शिलारूपेण परिवृत्तिं प्रापितेत्युक्तं भवति । एनं पक्षमाश्रित्यापि वाल्मीकिना यः शापप्रकार उक्तः स समर्थयितुं शक्यते । शिलारूपेण तिष्ठन्ती आहारविरहितैव सा बभूव । शिलात्वेन सा स्वरूपेणान्येषामदृश्या अभवत् । शिला च भस्मस्वेव तिष्ठति । शिलाभूतत्वात् स्वाभिप्रायमन्येषामिङ्गितेनापि प्रकाशयितुमसमर्था बभूव । एतदेव काष्ठमौनमित्युच्यते । तद्यथा—"काष्ठमौनम् इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्" (तत्त्ववैशारदी २-३२) । शिलारूपपरिणाम एवं व्याख्येयः । विष्णुपुराणे तु 'संदर्शनमात्रेणैवाहल्यामपापां चकार ।' ( ४-४-४२ ) इति रामसंदर्शनेनैव शापविमुक्तिरजायतेत्युक्तम् ।

माननीयान् महर्षीन् स्वशिविकावहनाय नियुञ्जान आत्मानमागस्कृतं नहुषश्चकार । महनीयमगस्त्यं वाहनारूढः पदा पस्पर्श । तमभिक्रुद्धेन मुनिना तेन सर्पो भव इति शप्तः । युधिष्ठिरेण शापविमोचनं भविष्यतीति कालं प्रतीक्षमाणोऽविलुप्तस्मृतिरेवावतस्थे । नहुष एवात्मानुभूयमानां दशां व्यञ्जयति—

कामक्रोधसमायुक्तो हिंसालोभसमन्वितः ।
मनुष्यत्वात् परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥
तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाश्वेभ्यो देवत्वमपि दृश्यते ॥
ब्रह्मर्षीणां सहस्रं हि उवाह शिबिकां मम ।
स ममापनयो राजन् भ्रंशयामास वै श्रियः ॥
ततस्तस्माद्विमानाग्रयात् प्रच्युतश्च्युतलक्षणः ॥
प्रपतन् बुबुधे आत्मानं व्यालीभूतमधोमुखम् ॥
( महा० वनपर्वणि १८३।१२-१३, ३६, ३८ )

इतरत्रास्मिन्नेव पर्वणि ( १८१ अध्याये २४ श्लोके ) नहुष आत्मानं परमदुष्कर्मा इति निर्दिशति ।

अगस्त्योऽप्याह—

स्वर्गाद् भ्रष्टो दुराचारो नहुषो बलदर्पितः ।
अथ मामस्पृशन् मूर्ध्नि पादेनाधर्मपीडितः ।
तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः ॥
( महा० उद्योगपर्वणि १७।७, १२-१३ )

कथैषा किञ्चिदिव विपर्यस्ता अनुशासनपर्वणि वर्णिता । अगस्त्यजटायामन्तः-स्थितो भृगुरेवं नहुषं पदा स्पृशन्तं शशाप—

यस्मात् पदावधीः क्रोधाच्छिरसीमं महामुनिम् ।
तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते ॥
( २५७।२३ )

दुश्चरितो नहुषोऽगस्त्येन जितप्रकृतिप्रभावेण सर्पतां नीतः । मान्यं विमानयन्नेष च्युतधर्मा एव । कुटिलसर्पणशील एष सर्पतां स्थाने प्रापितः ।

मनुष्यत्वसर्पत्वयोः साजात्याभावादेष विपरिणामः समर्थनीयो न भवतीति चेन्न; शरीरयोरनयोरण्डजत्वजरायुजत्वलक्षणाभ्यां भेदे विद्यमानेऽपि शरीरत्वमस्त्येव । शरीरं खलु कर्मोपभोगायोपादीयते । अत्रागस्त्येनैतादृशाचारस्य सर्पशरीरप्राप्तिरेवेति शासनं विदधे । जितभूतस्य तस्य वचसः प्रभावाद् मनुष्यशरीरं सर्पशरीरत्वेन विपरिणाममभजदित्यत्र न काचिद्विप्रतिपत्तिरुदेतुमर्हति ।

एवमेव शापविधयोरनेके समर्थनीयतां प्राप्नुवन्ति । तद्यथा—ययातिर्जरां प्राप, द्वाःस्थाः सनन्दनादिभिः शप्ता हिरण्याक्षहिरण्यकशिपुरावणादिरूपैर्मह्यां जनित्वा जनित्वा महत्कदनमन्वभवन् । नलकूबरमणिग्रीवौ धनदसुतौ विवस्त्रौ जले क्रीडन्तौ विलोक्य नारदः—

यदिमौ लोकपालस्य पुत्रौ भूत्वा तमःप्लुतौ ।
न विवाससमात्मानं विजानीतः सुदुर्मदौ ॥
अतोऽर्हतः स्थावरतां स्यातां नैवं यथा पुनः ।
स्मृतिः स्यात् ॥
( भागवते १०।१०।२०-२१ )

इति शशाप । तद्वचनात् कृष्णेन विमुक्ति प्रापुः । एवमेव यादवा विश्वामित्रादिमहर्षिसन्निधावपराद्धाः सर्वं यादवकुलं क्षीणतां निन्युः ॥

# सञ्जीवनीसिद्धिस्तस्या उपायश्च

श्री विनायकशर्मा परांजपे ।

## पुराणानां सर्वसंग्राहकत्वम्

पुराणानि तावद् भवन्ति सर्वसंग्राहकाणि । निमन्त्रणपत्रे यदुक्तं पुराणानि नाम साक्षाद् ज्ञानकोश इति, तत्तु वास्तविकं स्वरूपं पुराणानामिति वक्तुं सुशकम्। यतो हि वर्णयन्ति पुराणानि विविधा दर्शनसरणीः सांख्यमारभ्याद्वैतवेदान्तं यावत् सर्वा आस्तिकाः, निरूपयन्ति च प्रसङ्गवशाद् नास्तिकानि दर्शनानि चार्वाकमारभ्य शैवमतान्तानि । पुराणानि तावत् संक्षेपरूपेण कथयन्ति व्याकरणादीनां शास्त्राणां सारभूतान् विशिष्टानंशान् । संगृह्णन्ति कोशान्, संक्षेपयन्ति काव्यलक्षणग्रन्थान्, स्मृतीनामाचारग्रन्थानां च संक्षिप्तं स्वरूपमुपस्थापयन्ति । वर्णिताः सन्ति कलाः पुराणेषु, निरूपिता भवन्ति कथा अपि पुराणेषु । तत्र काश्चन सन्ति प्रामाणिकाः, काश्चित् सन्ति कपोलकल्पिताः । पुराणेषु वर्तते वर्णनं नदीनामस्ति माहात्म्यं तीर्थानां पर्वतानां जलाशयानां सागराणाञ्च । केवलं पुराणगतानां विषयाणां दर्शनेनैव यः कोऽपि तेषां महत्त्वं ज्ञातुं शक्नोति । एतावता पुराणोच्छिष्टं सकलं वाङ्मयमित्युक्तिर्न खलु भजेदतिशयोक्तिदोषमिति तावन्निश्चप्रचम् । आस्तां तावत् ।

## सञ्जीवनीविद्या पुराणोल्लिखिता

पुराणेषु विविधेष्वस्त्यस्या विद्यायाः समुल्लेखः । तत्रापि त्रिष्वाख्यानेष्वस्य मन्त्रप्रभावस्योपयोगः पुराणेषु मयासादितः । तेषु त्रिष्वाख्यानेषु दृश्यमानस्य सञ्जीवनी-सिद्धरूपस्य परिचयार्थं संक्षेपतस्तान्याख्यानान्यत्र भवतां पुरस्तादुपतिष्ठासुरस्मि ।

### १—कचदेवयान्युपाख्यानम् [ म० आ० ७६–७७ ( म० पु० २५–२८ ) ]

प्रायः समेषां भारतीयानां परिचितं भवतीदमतिरमणीयमुपाख्यानम् । तत्र तत्र सञ्जीवनीसिद्धिसंबद्धः कथांशस्तु भवत्येतादृशः—असुरगुरोः शुक्राचार्यस्य सञ्जीवनी-सिद्धिः परिचितासीत् । तस्या विद्यायाः प्रभावेणैव देवैर्युद्धे निहतानसुरान् पुनः पुनः

सञ्जीवयामास शुक्रः, तेन च देवानां पराभवोऽपरिहार्यो बभूव। ततश्च पराभव-शल्यमपनेतुं प्रयतमाना देवा बृहस्पतिसुतं कचं सञ्जीवनीविद्याग्रहणाय शुक्राचार्य-समीपं प्रेषयामासुः। तत्र शुक्राश्रमे निवसन् कचस्तत्सुतां देवयानीं महता चातुर्येण वशमानिनाय, दैत्यैस्तु ज्ञातकपटैः कचस्य विनाशार्थं तं घातयित्वैकान्ते तस्य मांसं वृकेभ्यः समर्पितम्। शुक्रो ज्ञातवृत्तान्तो देवयानीवचनेन सञ्जीवनीमन्त्रं प्रयुज्य कच-मुज्जीवयामास।

अथ कदाचिद् गच्छता कालेन दैत्यैः कचं निहत्य तं दग्ध्वा तस्य शरीररक्षां मद्ये संमिश्र्य तन्मद्यः समर्पितं शुक्राचार्यस्य। शुक्रस्तु प्रमादेन तत् पपौ। पानसम-नन्तरं दैत्यानां कपटमजानात्। पुत्र्या देवयान्याः प्रार्थनया चोदरस्थं कचं सञ्जीवनी-मन्त्रमपाठयत्। कचस्तु मन्त्रपाठेनोज्जीवितः, आचार्यस्योदरं भित्वा बहिराययौ। एवं कचः सञ्जीवनीमधिगम्य दिवं गतः। दैत्याश्च पराभूता अभवन् तुल्यबलतया।

२—सान्दीपनिसुतप्रत्यर्पणाख्यानम् ( वि० पु० ५–२१ )

विष्णुपुराणस्य पञ्चमेंऽशे एकविंशतितमेऽध्याये समागतास्ति कथेयम्। कृष्णः सान्दीपनेराश्रमे स्थित्वाधिजगाम विविधा विद्याः। विद्याधिगमोत्तरं च गुरुदक्षिणायै सान्दीपनिर्विज्ञापितस्तेन प्रार्थितश्च गुरुः स्वपुत्रं सागरापहृतं पुनरुज्जीवितमैच्छत्। कृष्णस्तु यमपुरीं गत्वा तमानिनाय, गुरवे च प्रत्यर्पयामास। कथाया अस्यास्तात्पर्यं त्वेतावदेव यत् सागरे निमग्नस्य गुरुपुत्रस्य कलेवरं संपाद्य सञ्जीवनीमन्त्रेण पुनः सचैतन्यं कृतमिति।

३—बभ्रुवाहनकथा ( म० आश्व० ७९–८१ )।

महाभारते आश्वमेधिके पर्वणि कथेयं प्रतिपादिता भवति। युधिष्ठिरेण चिकी-र्षितस्याश्वमेधस्य मेध्यमश्वं परिरक्षन्नर्जुनो मणिपूरराज्यं समायात्। तत्र च चित्राङ्गदा स्वपुत्रं प्रेरयति युद्धार्थम्। बभ्रुवाहनमात्मनः पुत्रमजानानोऽर्जुनो मन्दं युद्ध्यते। बभ्रुवाहनोऽपि बालचापल्यादज्ञानेन पितरं घातयति। पतिं मृतमवलोक्य चित्रा-ङ्गदा शोकाकुला प्राणपरित्यागं कर्तुमुद्यता भवति। अत्रान्तरे उलूपी सर्वं वृत्तं निवेद्य सञ्जीवनमणिं समादाय प्रत्युज्जीवयत्यर्जुनम्। अत्रापि वस्तुत उलूप्या सञ्जीवनीमन्त्रा-भिमन्त्रितेन मणिना प्रत्युज्जीवितोऽर्जुन इत्यवधेयम्।

एतस्मिन् कथात्रयेऽपि मृतस्य सञ्जीवनं मन्त्रं प्रयुज्य कृतमिति तु न साक्षान्निर्दिष्टमस्ति कस्मिन्नपि पुराणे। पुराणानां विषये हेतुपुरस्सरमनादरमुदपादयन् पाश्चात्याः पण्डिताः पूर्वतने काले। गच्छता कालेन तेषु कतिपये पण्डिताः पुराणानामैतिहासिकं स्वरूपं परिज्ञाय तेषां महत्त्वं वर्णयन्त उपलभ्यन्ते। एतासु कथासु विद्यमानं कल्पितांशं दूरीकृत्याप्येतावान्निर्गलितोऽर्थोऽस्माभिर्ग्रहीतुं शक्यते यद् मृतस्योज्जीवनं कर्तुं समर्था जनाः पुराणकाले आसन्। मन्त्रप्रभावेण च तेऽकालमृतं पुनरुज्जीवयन्ति स्म इति।

## उपायान्वेषणम्

तत्र तावत्तेषां कथांशानां सूक्ष्मेक्षिकया पर्यालोचने कृतेऽपि सञ्जीवनीशक्तेरुपायः पुराणेषु नैवोपलभ्यते। तर्ह्यस्याः शक्तेरधिगमस्य मार्गः कुत्र खलु गवेषणीय इति चेत्, तन्त्रशास्त्रेष्वित्येव वक्तव्यं भवेत्। तन्त्रशास्त्रे प्रतिपादिता भवन्ति शतशो मन्त्राः। तत्र शिवदेवतापराणां मन्त्राणां प्रतिपादनावसरे मृत्युञ्जयमन्त्रः प्रतिपादितो भवति। तस्यैव वैदिकस्य मन्त्रस्य "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात्" इति स्वरूपस्य साधनोपदिष्टा भवति। मया पठितेषु तन्त्रग्रन्थेषु ग्रन्थद्वय एव सञ्जीवनीमन्त्रानुष्ठानं समधिगतम्। मया तत्रेशानशिवगुरुदेवपद्धतौ पूर्वार्धे द्वितीयभागे एकोनत्रिंशे पटले यद्विधानमुपदिष्टं भवति तदत्रभवतां पुरस्तादुपस्थापयामि—

मनुस्त्रैयम्बकः श्रौतो मृतसञ्जीवनं स्मृतम्।
ऋषिर्वसिष्ठो भगवान् भार्गवश्चेति कश्चन॥
छन्दोऽनुष्टुब् देवता स्याद् रुद्रस्त्रैयम्बकेति च।

एवमृषिदेवताच्छन्दःसहितं वैदिकं मन्त्रमुपदिश्य तस्य मन्त्रस्य सिद्धये पुरश्चरणादिविधिरुपदिष्टः। तत्र मन्त्रपाठावसरे यस्य शिवस्य रूपं ध्येयं भवति तत्स्वरूपं निर्दिशति, यथा—

आसीनः पुण्डरीके दधदमृतमयं पूर्णकुम्भं निजाङ्के
पाणिभ्यां पुस्तकाक्षस्रजमपि सुधया पूर्णकुम्भौ सिताङ्गम्।
कुम्भाभ्यां सौधवर्षैर्धृतशशिशकले मूर्ध्नि सिञ्चन् कपर्दी
शुक्लाकल्पोऽष्टबाहुः प्रहसितवदनो रक्षतात् त्र्यम्बको वः॥

एवं देवताया ध्यानस्वरूपं वर्णयित्वा विस्तरेण वर्णितस्य पूजादिविधेः संक्षेपो भवत्येतादृशः।

समयदीक्षया दीक्षितो विप्रो ब्रह्मचर्यं पालयन् व्रत्यमन्नमशानो जितेन्द्रियः सन्नत्र मन्त्रानुष्ठानेऽधिकृतो भवति। पूर्वं प्रत्यहं भूतशुद्ध्यादिपूर्वाङ्गसहितमावरण-देवतासहिताया मुख्यदेवतायाः पूजनं विधाय जपः कर्तव्यः। स च जप एकलक्षपरिमितः कर्तव्यो भवति। जपोत्तरं तावत्तत्र शास्त्रोपदिष्टानि दश हवनीयद्रव्याणि संगृह्य प्रत्येकम् १००८ आहुतीर्मुख्यदेवतायै समर्पणीयाः, तदङ्गत्वेन च यथाशक्ति दशसहस्र-मारभ्य शतं यावद् ब्राह्मणा भोजनीयाः, मन्त्रोपदेष्टारं गुरुमपि हिरण्यवस्त्रादिदानेन पूजयेदित्यादि। एवं तस्य गुरूपदिष्टस्य मन्त्रस्य सिद्धिः संपाद्यते। तदुत्तरं च सिद्धस्य मन्त्रस्य यन्नाम प्रयोजनं मृतसञ्जीवनं तन्मन्त्रपाठमात्रेण कर्तुं शक्नोति साधकः। एवं मन्त्रसाधनां सविस्तरं प्रतिपाद्य ग्रन्थकृदस्य मन्त्रस्य प्रयोगं कृतवतामृष्यादीनां नामानि निर्दिशति। तौ च श्लोकौ—

येन शुक्रः पुरा देवैर्निहतान् युधि दानवान्।
मन्त्रेण जीवयामास कचमङ्गिरसः सुतम्॥
येन वज्रास्थिदेहोऽभूद् दधीचो मनुनामुना।
तेन त्रैयम्बकेनास्ति नासाध्यं भुवनत्रये॥

## सञ्जीवनीमन्त्रसिद्धेर्द्वितीय उपायः

अस्यैव सञ्जीवनीमन्त्रस्य सिद्धेरुपायोऽपरो निर्दिष्टो भवतीन्द्रजालविद्यासंग्रहाख्ये ग्रन्थे षट्कर्मप्रदीपिकाप्रकरणे। स च प्रकारो यथा शुक्रोपासितमृतसञ्जीवनीविद्या—

गायत्रीप्रथमं पादं त्र्यम्बकपादैकम्।
गायत्रीद्वितीयपादं त्र्यम्बकद्वितीयपादम्॥
गायत्रीतृतीयपादं त्र्यम्बकशेषपादम्।

एवं विशेषे प्रतिपादिते पूर्वाङ्गं सर्वं पूर्वोक्तमेव स्वीकर्तव्यं भवति। केवलं जपावसरे गायत्रीमन्त्रेण सहितस्त्र्यम्बकमन्त्रः पठनीयो भवति।

## मन्त्रसिद्धिरिदानीं संभवेन्न वा

एवं तन्त्रशास्त्रेषु प्रतिपादितो मन्त्रसिद्धिमार्गोऽद्याप्यनुष्ठातुं शक्यः। अधर्मप्रचुरे

कराले कलिकालेऽप्यलौकिकमनितरसाधारणं प्रभुत्वं सिद्धिं च दर्शयन्तः सन्त्येव महात्मानो विविधेषु प्रान्तेषु भारतस्य। किञ्च, वेदादीन्यनादिपरम्परया प्राप्तानि ग्रन्थजातानि किमिति वा मानवस्य प्रतारणार्थमन्यथा विलिखेयुः। एवं तर्ह्येतावदेव वक्तव्यं भवति। शास्त्रोपदेशमनुसृत्य सिद्धमन्त्रं गुरुमधिगम्य तत्सकाशाद् यथाविधि मन्त्रोपदेशं लब्ध्वा यथोपदेशं साङ्गं कर्मानुतिष्ठन् मानवोऽद्यापि मन्त्रसिद्धिं समधिगन्तुं शक्नुयादित्यस्ति मे द्रढीयान् विश्वासः।

## सिद्धेः प्रयोगः कर्तव्यो न वा ?

अत्र विषयेऽतीव जागरूकतास्माकमावश्यकी। यतो ह्येवं सिद्धस्य मन्त्रस्य विविधा उपयोगा विशिष्याभिचारिका अपि तेष्वेव तन्त्रशास्त्रग्रन्थेषूपदिष्टा भवन्ति। यदि नाम सिद्धमन्त्रः पुरुषो महतीं भूमिमनारूढः सामान्यो मानवो यथा स्वकीयशत्रून् घातयितुमीहते तथा प्रयतेत, तदानीमुभयथा हानिः संभवति—(१) इष्टाप्राप्तिः, (२) अनिष्टप्राप्तिश्चेति। यदि नाम सिद्धिः संपादनीया, तदानीं तत्र संपादितायाः सिद्धेर्यथाऽहितकारित्वं न स्यादेतादृशी व्यवस्थाऽवश्यं संपादनीया। यथा हि नाम विविधानामौषधपद्धतीनामुपयोगं कुर्वत्सु वैद्यवरेषु निर्बन्धो भवति, तथैव सिद्धिमन्यथोपयोक्तुः शासनं कर्तुमधिकारः कस्यचिदपेक्षितः। सिद्धमन्त्रस्य पुरुषस्य सिद्धिरन्यायेनोपयुक्ता स्वयमेव विनश्यतीत्यपि तन्त्रादिषूपदिष्टं भवति। यथा विविधाः संरक्षणोपाया अत्यन्तं जागरूकतयाऽस्माभिरवलम्ब्यन्ते, तद्वदस्योपायस्यापि प्रयोगादिकं कृत्वा स्वानुभवानुसारमपमृत्युनिवारणार्थमेव यदि नामोपयोगः कर्तुं शक्येत, तदानीमतीवोपकृताः स्याद् मानवजातिरित्येवमुक्त्वा आत्मीयं विषयमुपसंहरामि॥



# तापससिद्धिविमर्शः

श्रीरघुनाथशर्मा
वेदान्तविभागाध्यक्षचरः, वाराणसेयसंस्कृतविश्वविद्यालयस्य ।

साध्विदमुच्यते—

यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥

अस्य पद्यस्य चतुर्थपादार्थोऽतिगहनत्वाद् विशदीक्रियते, शेषं सुबोधम् । हि यतः, तपो दुरतिक्रममज्ञानाग्निः सर्वकर्मघस्मरादप्यतिबलवता प्रारब्धकर्मणा । प्रारब्धकर्मणो हि बलवत्त्वमुक्तं शास्त्रे—"नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" इति । यद्दुष्करम्, यथा—भगीरथस्य गङ्गानयनम् । यद्दुरापम्, यथा—पार्वत्या वरत्वेन शिवः । यद्दुर्गम्, यथा—ध्रुवस्य ध्रुवलोकः । यच्च दुस्तरम्, यथा—मार्कण्डेयस्य मृत्युः । तपस्शब्दः 'तप् सन्तापे' इत्यस्माद्धातोः कर्तर्यौणादिकेऽसुन्-प्रत्यये निष्पन्नः । तपति सन्तापयति कायं वाचं मानसं वा तत्तप इति व्युत्पत्तिः । तच्च तपस्तावत्त्रिविधम्—कायिकम्, वाचिकम्, मानसं चेति । तत्र कायिकम्—त्रिषवणस्नानम्, भूमिशयनम्, ब्रह्मचर्यम्, नानाविधव्रतोपवासादि पुराणधर्मशास्त्रेषु स्मृतम्; पञ्चाग्निसेवनादिकञ्च—ग्रीष्मे पञ्चाग्निमध्यस्थः, वर्षासु स्थण्डिलेशय इत्यादि शास्त्रविहितम्; वाचिकं तु—मौनम्, हितभाषणम्, मितभाषणम्, सत्यभाषण-मित्यादिरूपम्,

सत्यं ब्रूयात् प्रियं ब्रूयाद् न ब्रूयात् सत्यमप्रियम् ।
प्रियञ्च नानृतं ब्रूयादेष धर्मः सनातनः ॥

इत्यादि शास्त्रविहितम् । शास्त्राभ्यासरूपः स्वाध्यायोऽपि वाचिकं परमं तप इति शास्त्रेषु तत्र तत्र प्रसिद्धम् । प्रसिद्धश्च सत्यतपा नाम महर्षिर्योगसूत्रभाष्ये । प्रसिद्धश्च सत्यतपसां महर्षीणां पुराणेषु शापानुग्रहयोः प्रभावः । मानसञ्च—भूतानाम्-

नभिद्रोहेण सर्वभूतहितानुचिन्तनम्, योगशास्त्रविहितानि नानाविधानि निदिध्यासनानि च। गीतास्वपि च कायिकवाचिकमानसतपांसि निर्दिष्टानि। तद्यथा—

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम्।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते॥

हितमितमेध्याशनं खल्वात्मसाक्षात्कारोपयोगितपो भामत्यां प्रसिद्धमनाशकतपो नाम्ना। तथा च श्रुतिः—"तमेतमात्मानं ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति। कामानशनमपि तपस्शब्देन प्रसिद्धं शास्त्रेषु। कामानुसारमन्नवस्त्रयानपानासनादिकं भोग्यजातमुपस्थाप्य यो भोगस्तस्य त्यागः। यदृच्छया यथारब्धमुपस्थापितानां विषयाणामुपभोगश्च कामानशनपदार्थः। एतस्योदाहरणं ब्रह्मीभूता मम पितृपादाः श्रीकाशीनाथशर्माणः। येन हि विदुषां परःसहस्रेण शिरसा विधृतपादरजसा श्रीमदनमोहनमालवीय-श्रीनरदेवशास्त्रि-श्रीराघवदासप्रभृतिनेतृवर्गेणापि शिरःसमाश्लिष्टचरणेन लोकसमादृतहितोपदेशेन समुपेक्षितधनराशिप्राप्त्यर्थकर्मणा यदृच्छोपनतविषयैरेव वितृष्णेन, अजातशत्रुणा, सत्याहिंसयोराजीवमुपासकेन, अनुपजातवैरेण, राजद्वारं कदाप्यनुपतिष्ठता; न पादयोरुपनद्धे कदाचिदप्युपानहौ, न शिरसि विधृतमातपत्रम्, न च पिनद्धं मूर्धन्युष्णीषम्, न चाङ्गेषु कदाप्यामुक्तं कञ्चुकम्, न च सहजा कदाचिदपि परित्यक्ताभिजनी वाक्, न च परिहासकथास्वपि वितथा वाचः समुदीरिताः। यस्य च सत्यभाषणरूपवाक्तपःसिद्धयः साम्प्रतमप्यबाधं जाग्रति बहुषु जीवत्सु जनेषु। तेषामन्यतमोऽहं मम तोकश्च श्रीरमानाथशर्मा। मन्त्रसिद्धयोऽपि वाचिकतपःप्रभवा एव भवन्ति। यथा श्रीहर्षस्य खण्डनखाद्यनिर्माणं नैषधकाव्यनिर्माणं च। तदुक्तं श्रीहर्षेण खण्डने नैषधे च तत्र तत्र स्वयमेव—

श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं
श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।

तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥

एष च चिन्तामणिमन्त्रो मातुः सरस्वत्या वाग्बीजरूपो मध्ये तिष्ठति, आद्यन्तयोश्च प्रणवेन सम्पुटिते मम पितृपादैर्द्वादशवार्षिकस्य मेऽलौकिकविद्यावाप्तये हिमवत उपत्यकायां गुरुकुलकाङ्गडीमहाविद्यालये निवसद्भिर्गङ्गातटे आनन्दाश्रम-निवासं समयोपदिष्टः। यस्य प्रभावाद् मया वाक्यपदीयव्याख्या 'अम्बाकर्त्री' काण्डद्वयस्य व्यलेखि निरवद्या, विलिख्यते च तृतीयकाण्डस्य। यस्य च निरुपमात् प्रभावाद् व्याकरणाचार्येणाऽपि मया विविधवेदान्तविभागाध्यक्षधुरा वा० सं०-विश्वविद्यालये षड् वर्षाणि यावद् दुर्वहाऽपि समुदूढा। यस्य च मन्त्रस्योद्धार-स्तज्जन्या सिद्धिश्च नैषधमहाकाव्ये श्रीहर्षेण स्वयमेव निर्दिष्टा। तद्यथा—

अवामा वामार्धे सकलमुभयाकारघटनाद्
द्विधाभूतं रूपं भगवदभिधेयं भवति यत्।
तदन्तर्मन्त्रं मे स्मरहरमयं सेन्दुममलं
निराकारं शश्वज्जप नरपते सिध्यतु स ते॥
पुष्पैरभ्यर्च्य गन्धादिभिरथ सुभगैश्चारुहंसेव मां चे-
न्निर्यान्तीं मन्त्रमूर्तिं जपति मयि मतिं न्यस्य मय्येव भक्तः।
सम्प्राप्ते वत्सरान्ते शिरसि करमसौ यस्य कस्यापि धत्ते
सोऽपि श्लोकानकाण्डे रचयति रुचिरान् कौतुकं दृश्यमस्याः॥ इति।

आद्यन्तयोः प्रणवसम्पुटितेन केवलेन बीजेनापि जपकर्मणा नानाविधाः सिद्धयः सम्भवन्तीति कस्यचिदुक्त्या सूच्यते—

ऐंकारपञ्जरशुकीमुपनिषदुद्यानकलकण्ठीम्।
आगमविपिनमयूरीमन्तर्विभावये गौरीम्॥
अनवद्ये यदि गद्ये पद्ये शैथिल्यमावहसि।
तत्किं त्रिभुवनसारा तारा नाराधिता भवता॥

ऐंकारस्य प्रणवद्वयेन सम्पुटीकरणं विना पञ्जरत्वं न सम्पद्यत इति विभावनीयं विबुधैः। एष च विकत्थनदोषः सिद्धीनां प्रत्यक्षं निदर्शनाय विन्यस्यति मयि

मर्षितव्यः सूरिभिः। श्रीदुर्गासप्तशत्याः पाठशतीप्रभावं पाठसहस्रीपाठस्य च प्रभावं चण्डीपाठस्य च साधारणस्य प्रभावं सर्वे लोकाः सम्यग् विजानन्ति। मया तु बहुशोऽनुभूतोऽपि प्रतारणादोषपरिजिहीर्षया स्वानुभूतं नोच्यते। ललितासहस्रनाम्नां जपस्य प्रभावो वर्णितस्तत्रैव तत्पद्धतिश्चोक्ता तत्रैव, तच्च न मिथ्या भवितुमर्हति। अनुष्ठानेन हि सिद्धिर्न तु ज्ञानेनेति सम्यग् विदित्वाऽनुष्ठेयमेव, न तूपेक्षणीयं न चोपहसनीयं विज्ञैः। तत्र च सिद्धिसम्पन्नास्तट्टीकाकृतः श्रीभास्कररायमहाभागा एव प्रमाणम्। "नियुत्वान् वायवागहि" इति मन्त्रैकदेशजपस्य प्रभावो मयाऽनुभूतोऽन्न-निष्पावनाय वातमाहूतवता इतो विंशतिवर्षेभ्यः प्राक्। मन्त्रजपोऽपि वाचिकं तप एव। अनेन हि कर्मणा वाक्सन्तापमाप्नोति। अद्यापि च सनातनधर्मिषु जैनेषु बौद्धेषु इस्लाम-धर्मानुयायिषु च बहुविधानि स्वस्वसम्प्रदायानुसारेण व्रतान्युपवासाः संयमाश्च तपोरूपा दृश्यन्ते सिद्ध्यन्ति च। तानि च घुणाक्षरन्यायेन फलवन्तीति न वक्तुं शक्यन्ते, अनादिकालप्रवृत्तत्वात्। सत्यभाषणरूपतपसः सिद्धिरूपं फलमुक्तं पातञ्जल-योगसूत्रे—"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" इति।

अस्यार्थः—द्वादशवर्षानवरतकालेन सततसत्यभाषणनिषेधया वक्तव्यपुरुषे क्रियाश्रयत्वं फलाश्रयत्वं च भवति। तद्यथा—अधार्मिकं प्रति त्वं धार्मिको भूया इत्युक्ते तत्र धार्मिकक्रियाश्रयत्वं सम्पद्यते। त्वं सुखी भव, त्वं दुःखी भव—इत्युक्तौ तु तत्र सुखदुःखरूपक्रियाफलाश्रयत्वं सम्पद्यते। अचिन्त्यो मणिमन्त्रौषधीनां प्रभाव इति च विदुषामाभाणकस्तत्र तत्र शास्त्रेषु श्रूयते। प्रागुक्तान्नानाविधतपसः समुद्भूता कायेन्द्रिय-सिद्धिः। तदुक्तं योगसूत्रे—"कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" इति। अत्र व्यास-भाष्यम्—निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलम्। तदावरणमलापगमात् कायसिद्धिरणिमाद्या। तथेन्द्रियसिद्धिर्दूराच्छ्रवणदर्शनाद्येति। स्वाध्यायः परमं तप इत्यादिशास्त्रबोधितस्य स्वाध्यायरूपस्य तपसः सिद्धिरूपं फलं त्विष्टदेवतासम्प्रयोग-रूपम्। तदप्युक्तं योगसूत्रे—"स्वाध्यायादिष्टदेवतासम्प्रयोगः" इति। अत्र भाष्यम्—देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्ये चास्य वर्तन्त इति। अत्र स्वाध्यायशब्देन तत्तन्मन्त्रजपोऽभिप्रेतः। संयमो नाम मानसं तपो योगशास्त्रे प्रसिद्धः। त्रयमेकत्र संयम इति योगसूत्रानुसारेण धारणाध्यानसमाधित्रितयात्मकस्य संयमस्य मनोनिरोधरूपत्वेन मनःसन्तापहेतुत्वात् तपोरूपत्वम्; "देशबन्धश्चित्तस्य

धारणा, तत्र प्रत्ययैकतानता ध्यानम्, तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः, त्रयमेकत्र संयमः" इति सूत्रेषु संयमस्य मनोनिरोधरूपत्वप्रसिद्धेः। संयमप्रभवाः सिद्धयश्च बहुविधा विभूतिपादे योगसूत्रेषूपवर्णिताः। परिणामत्रयसंयमादतीतानागतज्ञानमित्यारभ्य हृदये चित्तसंविदित्यन्ताः।

एताश्च ज्ञानात्मिकाः सिद्धयः। एवंस्थिते कायसिद्धीरणिमाद्या इन्द्रियसिद्धीश्च दूराच्छ्रवणदर्शनाद्या अभीप्सुभिः कायिकं तपः प्रागुक्तं संसेवनीयम्।

वाक्सिद्धीश्च शापानुग्रहयोः सामर्थ्यरूपाः प्रेप्सुभिर्वाचिकं तपः स्तोत्रपाठमन्त्रजपादिकमाश्रयणीयम्। ज्ञानात्मिका विभूतिपादोक्ता नानाविधाः सिद्धीश्च कामयमानैस्तत्तद्देशेषु शास्त्रोदितेषु संयमरूपा योगा मानसतपोरूपा आसिद्ध्युदयादभ्यसनीयाः। तथा च शास्त्रविदां प्रवादः "नास्ति सांख्यसमं ज्ञानं नास्ति योगसमं बलम्" इति।

एताश्च सिद्धयः समाधेः पुरुषसाक्षात्कारोपयोगिनः प्रतिपक्षभूतत्वादुपेक्ष्या एव, न तूपादेया मुमुक्षुभिः; बन्धहेतुत्वात्। तदुक्तम्—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः"। तथा च वेदविदां प्रवादः—

जरद्गवः कम्बलपादुकाभ्यां द्वारि स्थितो गायति मद्रकाणि।
तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्घः॥ इति।

इदं च पद्यं यद्यप्यनर्थकमिति बुद्ध्योपेक्षितं विद्वद्भिः, तथाप्यस्यार्थः साधुः प्रदर्श्यते। जरद्गवःअनादिर्जीवः। कम्बलपादुकाभ्यां मायाया आवरणविक्षेपशक्तिभ्यामुपलक्षितः। इत्थम्भूतलक्षणे तृतीया। कम्बलेन ह्याच्छादयति पादुकाभ्याञ्च विहरतीति सादृश्यात् कम्बलपादुकापदाभ्यामावरणविक्षेपशक्ती लक्षिते अत्र। द्वारिमोक्षद्वारि नृदेहे स्थितः। मद्रकाणिमद्राणि मनसः प्रियाणि विषयपञ्चकसम्बन्धीनि गीतानि गायति। तम् एतादृशं जीवम्, ब्राह्मणीब्रह्मसम्बन्धिनी ब्रह्मविषया बुद्धिः पुत्रकामा मोक्षरूपं पुत्रं कामयमाना सती पृच्छति। हे राजन्! राजते स्वयं प्रकाशत इति राजा, तत्सम्बोधनम्। हे स्वप्रकाशसच्चिदानन्दरूप! रुमायाम्लवणखनौ, तत्सदृशे आनन्दमात्रस्वरूपे ब्रह्मणि। लवणखनिर्यथा

सर्वात्मना लवणरसैव, तथा ब्रह्मापि सर्वात्मनानन्दघन एवेति सादृश्याल्लक्षणया रुमापदेनात्र ब्रह्मणो निर्देशः। लशुनस्य हेयत्वतुच्छत्वाभ्यां लशुनतुल्यस्य विषयसुखस्य। कोऽर्घः किं मूल्यमिति। सिद्धिपदञ्च त्रिविधास्वपि सिद्धिषु बाहुलकात् करणक्तिन्नन्तमित्यलं बहुव्याहारेण।

प्रवर्ततां प्रकृतिहिताय पार्थिवः प्रवर्ततां तपसि विपश्चितां गणः।
निवर्ततां कलहसमुद्भवा विपद् विवर्ततां दशसु दिशासु मङ्गलम्॥



# पुराणेषु क्रियासिद्धिः

श्रीमध्वाचार्य आद्यः, रामनगरस्थकाशीराजन्यासपुराणविभागानुसन्धानसदस्यः ।

कोऽयं सिद्धिशब्दार्थ इति जिज्ञासा सर्वेषां विचारकाणां मनसि तदा तदा समुन्मिपति । तत्रेदमेव सिद्धेः स्वरूपम्—यत् सिद्धिः 'यया सुखेनैवेष्टार्थस्य लाभः' सा इति । अनायासेन कायिकानां वाचनिकानां मानसानाञ्च कार्याणां साधनेऽनितरसाधारणमैहिकामुष्मिकं च सामर्थ्यं समुपजायते । सा च सिद्धिर्भूतिशब्देन, ऐश्वर्यशब्देनाऽपि च बहुषु स्थलेषु निर्दिश्यमाना दृश्यते । सा च सिद्धिरष्टधाऽत्र प्रस्तूयते—

अणिमा महिमा चैव लघिमा गरिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ॥ इति ।

तत्र चाणिमा—अणुभावः, यतः शिलामपि प्रविशति । लघिमा—लघुभावः, यतः सूर्यमरीचिमालम्ब्य सूर्यलोकं याति । महिमा–महतो भावः, यतो महान् सम्भवति । प्राप्तिः—अङ्गुल्यग्रेण चन्द्रं स्पृशति । प्राकाम्यम्—इच्छानभिघातः, यतो भूमावुन्मज्जति निमज्जति यथोदके । वशित्वम्—भूतभौतिकं वशीभवत्यस्यावश्यम् । ईशित्वम्—भूतभौतिकानां प्रभवस्थितिमीष्टे इति । साधारणानां मानवानामियं दुर्लभा सिद्धिः सत्येन, ब्रह्मचर्येण, तपसा, महता प्रयासेन च सम्पादनीया भवति । योगिनां (निष्कामकर्मकर्तॄणाम्) अनायासेनैता अन्याश्च सिद्धयः समुत्पद्यन्ते । अत एव 'योगेन सिद्धिर्जायते' इत्यभिप्रेत्य भगवान् योगशास्त्रप्रवर्तकः पतञ्जलिर्विभूतिपादे विभूतीर्विस्तरशो वर्णयामास । यथा—भुवनज्ञानं सूर्ये संयमात्, सर्वभूतरुतज्ञानमित्यादि । अयमर्थो मत्स्यपुराणे उपवर्णितो दृश्यते ब्रह्मचर्यप्रशंसामुखेन, यथा—

ब्रह्मचर्ये स्थितं धैर्यं ब्रह्मचर्ये स्थितं मनः ।
ये स्थिता ब्रह्मचर्येषु ब्राह्मणा दिवि संस्थिताः ॥
नास्ति येषां विना सिद्धिर्न वा सिद्धिं विना यशः ।
नास्ति लोके यशो मूलं ब्रह्मचर्यात् परं तपः ॥ इति ।

एवं पुराणेष्वन्यत्र च यदि दृष्टिर्निक्षिप्यते तदायमर्थः करतलामलकवत् स्फुटमवभासते। येन प्राचीनानां महर्षीणां चरितं स्मृतिपथमायाति। यथा ब्रह्मपुराणे गौतमीमाहात्म्ये—

द्वापरेऽनावृष्ट्या दुर्भिक्षे सति गौतमस्य प्रभावं श्रुत्वाऽनेकदेशान्मुनयः गौतमाश्रमं प्राप्ताः। गौतमस्तु स्वसामर्थ्येन ( सिध्या ) क्षेत्रे धान्यानि वापयित्वा तदैव फलितानि धान्यानि निष्कास्य प्रत्यहं समागतान् सर्वान् भोजयति स्म। ईदृशी सिद्धिर्गौतमऋषेरासीदित्यधो निर्दिष्टैर्ब्रह्मपुराणवचनैरवगम्यते। यथा—

एतस्मिन्नन्तरे ब्रह्मन्ननावृष्टिरजायत।
द्विर्द्वादशसमा मर्त्ये सर्वप्राणिभयावहा॥
ततो विभ्रष्टमभवज्जगत् स्थावरजङ्गमम्।
विना तु गौतमं पुण्यमाश्रमं सर्वकामदम्॥

इत्यादिभिः,

जायन्ते च तदौषध्यो लूयन्ते च तदैव हि।
सम्पत्स्यन्ते तदोप्यन्ते गौतमस्य तपोबलात्॥
सर्वाः समृद्धयस्तस्य संसिध्यन्ते मनोगताः।
प्रत्यहं वक्ति विनयाद् गौतमस्त्वागतान् मुनीन्॥
पुत्रवच्छिष्यवच्चैव प्रेष्यवत् करवाणि किम्।
पितृवत् पोषयामास संवत्सरगणान् बहून्॥

इत्यन्तैः श्लोकैः।

श्रीमद्वाल्मीकीये रामायणे तत्रभवतोः प्रातःस्मरणीयचरितयोर्विश्वामित्रवसिष्ठयोः संवादः सर्वेषां विदित एव। सिद्धिं विना कथमीदृशस्य क्षत्रबलसंयुतस्य विश्वामित्रस्याभिभवः सम्भाव्यते। एवं भगवतः कुम्भसम्भवस्य समुद्रपानम्, वायुनन्दनस्य समुद्रसन्तरणम्, मलयपर्वतस्थितस्य सम्पातेरशोकवन उपविष्टायाः सीताया दर्शनं कथं सम्भाव्यते। एवं मार्कण्डेयपुराणे ६१-६२ तमेऽध्याये पादलेपरूपायाः सिद्धेः, अस्या अपि श्रेष्ठायाः शीघ्रगमनरूपायाः सिद्धेराख्यायिका प्रसिद्धा वर्तते। तामपि श्रीमतां पुरस्तादुपस्थापयामि।

यथा—कश्चन श्रौताग्निसम्पन्नस्तपस्वी ब्राह्मणोऽतिथिप्रिय आसीत्। तस्यावसथं कश्चन तरुणः कृताखिलभूभ्रमणोऽतिथिः समाजगाम। तमर्घ्यपाद्यादिना सत्कृत्य

तस्य सर्वं वृत्तान्तं श्रुत्वा कथं भवानल्पीयसैव वयसा समग्रां यात्रां विना साधनमकार्षी-रिति पप्रच्छ। स तु मन्त्रौषधिप्रभावेणेति प्रत्युत्तरं ददौ।

मन्त्रौषधिप्रभावेण विप्राप्रतिहता गतिः।
योजनानां सहस्रं हि दिनार्धेन व्रजाम्यहम्॥ इति।
(ब्रह्मपु० ६१।१२)

तद्वचनं श्रुत्वा ब्राह्मणः प्रहृष्टमनाः सन् तद्दानाय प्रार्थयामास। तद्दत्तेन पादलेपेन संयुतो ब्राह्मणः शीघ्रमेव नगाधिराजं हिमालयं ययौ। तत्र भ्रमन् हिमालयस्य सौष्ठवं दृष्ट्वा यदा गृहं समागन्तुं प्रवृत्तः, तदा ज्ञातवान् यद्धिमालयदेशसञ्चरणेन द्रवीभूतो हिमोपलः पादलेपं धावयामासेति। अग्निहोत्रसमये सायं गृहमागन्तुमसमर्थः सन् गार्हपत्यं संस्तूय तद्द्वारा प्राप्तेन तेजसा पादलेपौषध्यपेक्षया शीघ्रमेव गृहं प्रापेति। अतः सत्येन ब्रह्मचर्येण तपसा सेवया च श्रेष्ठा सिद्धिर्भवतीति ज्ञायते। पादलेपौषध-निर्माणप्रकारस्तु कौटिल्यार्थशास्त्रे महीशूरमुद्रितपुस्तके ४४६ पृष्ठे स्थितमत्र दर्शयिष्यते श्रोतॄणां सौकर्याय—

### [ आशतयोजनाश्रान्तगमनयोगः ]

"कुलीराण्डदर्दुरखारकीटवसाप्रदेहेन द्विगुणो दारकगर्भः, कङ्कभासपार्श्वोत्पलोद-काविष्टश्चतुष्पादद्विपदानां पादलेपः, उलूकगृध्रवसाभ्यामुष्ट्रचर्मोपानहावभ्यज्य वटपत्रैः प्रतिच्छाद्य पञ्चाशद्योजनान्यश्रान्तो गच्छति, श्येनकङ्ककाकगृध्रहंसक्रौञ्चवीचि-रल्लानां मज्जानो रेतांसि वा योजनशताय। सिंहव्याघ्रद्विपिकाकोलूकानां मज्जानो रेतांसि वा सार्ववर्णिकानि गर्भपतनान्युष्ट्रिकायामभिभूय श्मशाने प्रेतशिशून् वा तत्समुत्थितं मेधो योजनशताय।"

एवं सन्ति परःसहस्रमुदाहरणानि, न तेषां विशदीकरणेन तत्रभवतां भवतां समयमतिवाहयितुमिच्छामि। परमीदृशीं सिद्धिं लब्धुं मनुष्याणां मध्ये कश्चिदेव यतते, यतमानानामपि मध्ये कोऽपि सिद्धिं समधिगच्छति।

किञ्च, मानुषे लोके कर्मजा सिद्धिर्द्रागेव सम्पद्यत इति भगवान् पार्थसारथि-रर्जुनायोपदिदेश—"क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा" इति। अस्मत्पूर्वजै-

स्त्यागतपस्सत्यनिरतैर्नानाविधाः सिद्धयः सम्पादिताः, याभिरिह लोकेऽदीनं जीवनं परलोके देवतानामानुकूल्यमन्ते च भगवत्प्रसादद्वारा परमपुरुषार्थमनायासेन प्राप्तमिति श्रूयते। साम्प्रतमप्यस्मिन् भारते वर्षे तादृशाः सात्त्विकास्त्यागिनः सत्यनिष्ठा ब्रह्मचर्यपरायणाः सिद्धिं प्राप्ताः प्रापकाः प्राप्याश्च च विरला एव दृश्यन्ते। तादृशैरेव महात्मभिः प्राचीनभारतगौरवं संरक्ष्यते, येन च वयमात्मानं गौरवास्पदं मन्यामहे।

परन्तु केचनास्मद्भ्रातरो भारतीयानामस्माकं सर्वस्वभूतेषु पुराणेष्वनास्थां कुर्वाणा विषयेऽस्मिन्नुदासते, परन्तु तान् प्रति वयं शोचामः। अन्ते चोदयनाचार्यश्लोकेनैव तान् सम्बोध्य विरमामः।

इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधाति हृदये ते शैलसाराशयाः।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक त्वयैव कृपया ते तारणीया नराः॥ इति।

एवं च वसिष्ठगौतमब्राह्मणादीनां चरित्रेणेदमेव ज्ञायते यत्सिद्धेर्मूलं मुख्यसाधनं क्रियात्मकं तप एवेति॥



# सिद्धीनां विवेचनं पुराणोक्तनिदर्शनं च

श्री आनन्दस्वरूपगुप्तः, रामनगरस्थकाशीराजन्यासपुराणविभागसम्पादकः ।

प्राचीनकाले भारतदेशे बहव ऋषयो योगिनः सिद्धाश्च बभूवुः । साम्प्रतमपि भारतेऽन्यत्रापि च यत्र तत्र केचित् सिद्धा योगिनः प्राप्यन्ते । अद्यापि यत्किञ्चित् प्राचीनं भारतीयवाङ्मयमवशिष्टमुपलभ्यते तेनेदं विज्ञायते यत् सिद्धीनां भूमिरासीद् भारतं वर्षम् । अत एव योगिनः सिद्धाश्चात्र सिद्धिबलेन बहूनि लोकोत्तराण्यपि कार्याणि सम्पादयन्तो लोकोपकारपरा बभूवुः । भारतीयसंस्कृत्याः स्वर्णयुगश्च तदानीमासीत्, परन्तु "कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः" इदं नियममनुसृत्य सिद्धीनां देशे भारतवर्षेऽपि सिद्धीनां सर्वथा विलोप इदानीं प्रतिभाति, येनायं देशः सिद्धिप्रधानामाध्यात्मिकीं संस्कृतिं विहाय श्वोभावात्मिकां सर्वेन्द्रियतेजोऽपहारिकाञ्च भौतिकीं संस्कृतिमवलम्ब्य प्राचीनात् स्वगौरवाद्धीयते । परं चक्रनेमिक्रमेण पुनरप्यधुनास्माकं देशस्य दशा स्पष्टमेवोपरि गच्छन्ती प्रतीयते, यतो राजनैतिकं स्वातन्त्र्यं प्राप्यास्माभिरिदानीं सांस्कृतिकस्वातन्त्र्यप्राप्तये प्राचीनशास्त्रोक्तानां सिद्धीनां विचारेऽध्ययने च रुचिः प्रदर्श्यते ।

## सिद्धि-स्वरूपम्

सिद्धिर्नाम योगिनः पुरुषस्य स्वाभाविकी प्रयत्नसाध्या वा काचिदतिमानुषी शक्तिर्लोकोत्तरं सामर्थ्यं वा । अस्माकमवचेतने मनसि ( Subconscious mind ) बह्वय आश्चर्यवत्यः शक्तयः प्रसुप्ता इवाविकसितास्तिष्ठन्ति । ताः समीचीनैर्योगादिसाधनैः प्रकृष्टं विकासं प्रापिताः सिद्धयः सम्पद्यन्ते, यासां प्रभावेण मर्त्योऽप्यमृतत्वं लभते, अलौकिकमुत्कर्षञ्च प्राप्नोति । सिद्धयस्तु योगविभूतयः । अतस्ताः प्रकृष्टाः सात्त्विकाः शक्तयः, या आत्मदर्शनार्थं ब्रह्मप्राप्तये च सोपानभूताः सन्ति, सामान्यजनैरसाध्यानि लौकिकानि कार्याणि च साधयन्ति । योगमार्गे भक्तिमार्गे ज्ञानमार्गे वा प्रकर्षं प्राप्तानां सदाचारवतां पुरुषाणां तु सिद्धयः स्वत एव प्रादुर्भवन्ति । परन्तु न ते महात्मानस्तासु प्रसज्जन्ते, परोपकारायैव च ते तासामुपयोगं कुर्वन्ति । अतो न

सिद्धयः कदाचिदपीन्द्रजालवत् प्रदर्शनार्हा मन्तव्याः, इन्द्रजालचमत्कारास्तु तावदयोगिनामसाधूनामपि च सिध्यन्ति। अतो न ते 'सिद्धि'पदेन कदाचिदप्यभिधातव्याः, कौतूहलमात्रजनका एव ते भवन्ति।

### सिद्धिप्रकाराः

सिद्धीनां सुव्यवस्थितं वैज्ञानिकं शास्त्रीयं विवरणं पातञ्जलयोगसूत्रे[1] वर्तते। तत्रोक्ताः सिद्धयः पञ्चविधाः, यथा—(१) जन्मजाः, (२) ओषधिजाः, (३) मन्त्रजाः, (४) तपोजाः, (५) समाधिजाश्च। तासु—

(१) जन्मजाः सिद्धयोऽनेकपूर्वजन्माभ्यासवशात् प्राक्तनप्रकृष्टपुण्यकर्मवशाच्च जन्मत एव सिद्धानां कपिलादीनां योगिनां महर्षीणां संभवन्ति। एतादृश्यश्च सिद्धयः पुराणेषु बहुत्र निर्दिष्टाः।

(२) ओषधिजाः सिद्धयः, यथा मार्कण्डेयपुराणे (६१-६२ अध्याययोः) कश्चिद् वरुणातटनिवासी विप्र एकस्य पादलेपस्य प्रभावेण योजनानां सहस्रं दिनार्धेन गन्तुं शक्तो बभूवेत्युक्तम्। रसायनादिदिव्यौषधिप्रयोगेण दीर्घायुष्यरूपसिद्धिर्दिव्यशक्तयश्च प्राप्तुं शक्यन्ते। यथा चरकसंहितायाम्—"अयं च कालो रसायनानां दिव्याश्चौषधयो हिमवत्प्रभवाः प्राप्तवीर्याः। तद्यथा—ऐन्द्री ब्राह्मी पयस्या क्षीरपुष्पी.........जीवनीयाश्चान्याः पयसा प्रयुक्ताः षण्मासात् परमायुर्वयस्तरुणमनामयत्वं स्वरवर्णसम्पदामुपचयं मेधास्मृतिमुत्तमबलमिष्टांश्चापरान् भावानावहन्ति सिद्धाः।" तथा च ब्रह्मसुवर्चलासूर्यकान्तासोमाद्यष्टानामोषधीनाम् "यां यामेवोपलभेत, तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां दिग्वासाः शयीत, तत्र प्रलीयते षण्मासेन पुनः पुनः संभवति, तस्याजः पयः प्रत्यवस्थापनम्। षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः, स्वयं चास्य सर्ववाचोगतानि प्रादुर्भवन्ति, दिव्यं चास्य चक्षुः श्रोत्रं भवति, गतिर्योजनसहस्रं दशवर्षसहस्राण्यायुरनुपद्रवं चेति"। (च० सं० चिकित्सितस्थानम्, १।४।६–७)

(३) मन्त्रजाः सिद्धयस्तु केषाञ्चिद् वैदिकानां तान्त्रिकाणां च मन्त्राणां विधिवज्जपेन

---

१. 'जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः' (यो० सू० ४।१)।

संभवन्ति। यथा व्यासभाष्ये—"मन्त्रैराकाशगमनमणिमादिलाभः" (यो० सू० ४।१, व्यासभाष्यम्)।

(४) तपःसिद्धिर्यथा विश्वामित्रादीनामिति भोजः (यो० सू० ४।१, भोजवृत्तिः)। अत्रेदं बोध्यं यन्न केवलं शास्त्रोक्तविधानेन बहुकालं विविधप्रकारं शरीरेन्द्रियमनःपीडनमेव तपः, परन्तु योगस्य बहिरङ्गानां यमनियमादीनामभ्यासोऽपि तपः। पुराणेष्वन्यत्रापि चाहिंसासत्यब्रह्मचर्यादयोऽपि तप इत्याख्याताः। अहिंसाब्रह्मचर्यशौचादयः शारीरं तपः; अनुद्वेगकरं सत्यं प्रियहितं च वाक्यं स्वाध्यायाभ्यसनं च वाङ्मयं तपः; मौनं (वाग्विषयको मनःसंयमः) सौम्यत्वं भावसंशुद्धिरात्मविनिग्रहश्च मानसं तप इति च गीतासु (भ० गी० १७।१४-१६)। तस्माद् यमनियमादीनामभ्यासेन याः सिद्धयः संभवन्ति ता अपि तपःसिद्धयः। अहिंसासत्यब्रह्मचर्यादियमानां शौचसंतोषादिनियमानां च अभ्यासवशात् प्रकर्षमागच्छतामनुनिष्पादिन्यः सिद्धयो यथा भवन्ति, ता योगसूत्रे (२।३५–४५) सम्यक् प्रतिपादिताः। तपसोऽणिमाद्या कायसिद्धिस्तथा सूक्ष्मव्यवहितविप्रकृष्टदर्शनादिसामर्थ्यरूपा इन्द्रियसिद्धिश्च संभवतीति तत्रैव ४३ सूत्रे प्रतिपादितम्।

शास्त्रविधानमनुसृत्य शरीरेन्द्रियमनःपीडनरूपतपःसाधनेन मनसि निहिताः सङ्कल्पशक्तिः (Will-power) प्रकर्षं प्राप्नोति, ततश्च सिद्धयः संभवन्त्येव। अतो नात्र तादृशतपःसाधनमहत्त्वापकर्षविविक्षा। पुराणेषु सुरैरसुरैर्महर्षिभिश्च तादृशतपश्चरणेन सिद्धयः प्राप्ता इति बहुत्र निदर्शितम्।

मन्त्रौषधितपःसमुदायाद् दीर्घायुष्यादिप्राप्तिरूपा सिद्धिः सम्भवति, तस्या अप्युल्लेखश्चरकसंहितायां वर्तते, यथा—

संवत्सरं पयोवृत्तिर्गवां मध्ये वसेत् सदा।
सावित्रीं मनसा ध्यायन् ब्रह्मचारी यतेन्द्रियः॥
संवत्सरान्ते पौषीं वा माघीं वा फाल्गुनीं तिथिम्।
त्र्यहोपवासी शुक्लश्च प्रविश्यामलकीवनम्॥
बृहत्फलाढ्यमारुह्य द्रुमं शाखागतं फलम्।
गृहीत्वा पाणिना तिष्ठेद् जपन् ब्रह्मामृतागमात्॥

तदा ह्यवश्यममृतं वसत्यामलके क्षणम् ।
शर्करामधुकल्पानि स्नेहवन्ति मृदूनि च ॥
भवन्त्यमृतसंयोगात् तानि यावन्ति भक्षयेत् ।
जीवेद्वर्षसहस्राणि तावन्त्यागतयौवनः ॥
सौहित्यमेषां गत्वा तु भवत्यमरसन्निभः ।
स्वयं चास्योपतिष्ठन्ते श्रीर्वेदवाक्यरूपिणी ॥

( च० सं०, चि० स्था०, १।३।६ )

यद्यपि 'शतायुर्वै पुरुषः' इति श्रूयते, तथापि शतायुष्ट्वं सामान्यमानवमुद्दिश्यैवोक्तम् । योगबलेनायुःप्रकर्षः प्राप्तुं शक्यते । अत एवाथर्ववेदवचनम्—

"जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम् ।" (अ० वे०, १७।१।२७)

ययातिः सहस्रवर्षपर्यन्तं स्वपुत्रस्य पूरोर्यौवनेन विषयान् चचारेति मत्स्यपुराणेऽप्युक्तम्[1] ।

(५) **समाधिजाः सिद्धयो** धारणाध्यानसमाधित्रयात्मकात् संयमाद् भवन्ति । एताः सिद्धयस्तु समाहितचित्तानामेव भवन्ति । यदा योगिभिरेकविषयाणि धारणाध्यानसमाधिरूपाणि त्रीणि साधनानि प्रयुज्यन्ते, तदा तादृशात् संयमात् तद्विषयाः सिद्धयः प्रादुर्भवन्ति । समाधिजानां सिद्धीनां सोपपत्तिकं प्रतिपादनं [2]योगसूत्रस्य विभूतिपादे उपलभ्यते ।

ताश्च सिद्धयः संयमविषयभेदात् तत्र नानाविधाः प्रोक्ताः । यथा—

अतीतानागतज्ञानम्, सर्वभूतरुतज्ञानम्, पूर्वजातिज्ञानम्, परचित्तज्ञानम्, अन्तर्धानम्, अपरान्त( शरीरवियोगकाल )ज्ञानम्, हस्तिबलादीनि, सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्, भुवनज्ञानम्, ताराव्यूहज्ञानम्, तारागतिज्ञानम्, कायव्यूहज्ञानम्, क्षुत्पिपासानिवृत्तिः, चित्तस्य कायस्य च स्थैर्यम्, सिद्धदर्शनम्, सर्वज्ञानम्, परशरीरप्रवेशः, जलपङ्ककण्टकादिष्वसङ्गः, ज्वलनम्, आकाशगमनम्, पञ्चभूतजयः,

१. म० पु० ३४।२-८; द्रष्टव्यं महाभारतं ( आदिपर्व ) च ।
२. यो० सू० ३।१६-४९ ।

भूतजयादैश्वर्यापरनामधेयानाम[1]णिमाद्यष्टमहासिद्धीनां[2] प्रादुर्भावः कायसंपत्प्राप्तिश्च; इन्द्रियजयः, इन्द्रियजयाच्च कायस्य मनोजवित्वमिन्द्रियाणां कायनिरपेक्षाणां वृत्तिलाभः, सर्वप्रकृतिविकारवशित्वरूपः प्रधानजयश्चेति तिस्रो मधुप्रतीकानामसिद्धयः संभवन्ति[3]। कैवल्यपादेऽपि निर्माणचित्तानां निर्माणकायानां चोल्लेखो वर्तते[4]। एताः समाधिजाः सिद्धयस्तु धारणाध्यानसमाधिसमूहरूपात् संयमाद् योगिनामेव भवन्ति, न त्वयोगिनाम्। यथा मात्स्ये—

'नास्ति योगं विना सिद्धिः' ( म० पु०, १७४।३९ )।

परन्तु मैत्री, करुणा, मुदितेति तिस्रो[5] भावना यदा प्रकर्षं गच्छन्ति, तदा धारणाध्यानादेर्विनापि केवलं भावनारूपसमाधेरेव मैत्र्यादिबलानि प्रादुर्भवन्ति। 'तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखाकरोति, ततः सर्वहितो भवति। एवं करुणाबलात् प्राणिनो दुःखाद् दुःखहेतोर्वा समुद्धरति। एवं मुदिताबलाज्जीवलोकस्य माध्यस्थ्यमाधत्ते" ( यो० सू० ३।२३, वाचस्पतिमिश्रः )।

## सांख्योक्ताः सिद्धयः

सांख्ये द्विविधाः सिद्धयः प्रोक्ताः—(१) ऐश्वर्यप्रादुर्भूता ऐश्वर्याभिधानाश्चाणिमाद्या अष्टौ सिद्धयः ( अणिमा, लघिमा, महिमा, प्राप्तिः, प्राकाम्यम्, वशित्वम्, ईशित्वम्, कामावसायित्वञ्च)[6]। तथा (२) प्रत्ययसर्गान्तर्भूताः शास्त्रश्रवणमारभ्य आविवेकख्यातेः प्रादुर्भूतास्तारकादिनामिका ऊहाद्या अष्टौ सिद्धयः ( तार-सुतार-तारतार-रम्यक-सदामुदित-प्रमोद-मुदित-मोदमानाख्याः )[7]।

---

१. 'एतान्यष्टावैश्वर्याणि' ( यो० सू० ३।४५—व्यासभाष्यम् )।

२. 'एतेऽणिमादयोऽष्टौ गुणा महासिद्धय उच्यन्ते' ( तत्रैव भोजवृत्तिः )।

३. यो० सू० ३।४८, व्यासभाष्यं भोजवृत्तिश्च; 'एताः सिद्धयो जितेन्द्रियस्य संभवन्ति, ताश्चास्मिन् शास्त्रे मधुप्रतीका इत्युच्यन्ते' ( भोज० )।

४. यो० सू० ४।४, व्यासभाष्यञ्च; तत्र वाचस्पतिमिश्रः—"एकमेव चित्तं प्रदीपवद् विसारितया बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्त आह—'निर्माणचित्तान्यस्मितामात्रात्' इति ॥"

५. यो० सू० ३।२३, व्यासभाष्यम् 'मैत्रीकरुणामुदिता इति तिस्रो भावनाः।...पापशीलेषूपेक्षा, न तु भावना। ततश्च तस्यां नास्ति समाधिरित्यतो न बलमुपेक्षातः।'

६. सांख्यकारिका २३, सांख्यतत्त्वकौमुदी च—'ऐश्वर्यमपि बुद्धिधर्मः, यतोऽणिमादिप्रादुर्भावः'।

७. सां० का० ५१, सां० त० कौ० च।

तत्रैश्वर्यं नाम सांख्योक्तानां सात्त्विकानां चतुर्णां बुद्धिधर्माणामन्यतमः सात्त्विको धर्मः। यथा—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।
सात्त्विकमेतद्रूपं तामसमस्माद् विपर्यस्तम्॥
(सांख्यकारिका २३)

अणिमाद्याश्चाष्टौ सिद्धय ऐश्वर्यप्रादुर्भूताः। एता अणिमाद्याः सिद्धयः सांख्ये योगे च समानाः। आसां विवरणं (यो० सू० ३।४५) व्यासभाष्ये सांख्यकारिकायां (२३) वाचस्पतिमिश्रकृतसांख्यतत्त्वकौमुद्याञ्च सविस्तरं प्रदत्तम्, परन्तु प्रत्ययसर्गान्तर्भूतास्तारकादिनामिका ऊहाद्याः सिद्धयो विवेकख्यातेः सोपानभूताः सन्ति, सांख्य एव च ताः प्रतिपादिताः, सांख्य(प्रकृतिपुरुषविवेकरूपज्ञान)-मार्गावलम्बिनामेव च ताः संभवन्ति।

## सिद्धीनां पुराणोक्तानि निदर्शनानि

(योगजसिद्धीनां निदर्शनानि पुराणेषु बहूनि प्राप्यन्ते। तेषां कानिचिदत्र प्रदर्श्यन्ते। यथा—

(१) **सर्वभूतरुतज्ञानम्**—मत्स्यपुराण एकविंशतितमेऽध्याये योगविदः पाञ्चालराजब्रह्मदत्तस्य सर्वभूतरुतज्ञानमुक्तम्।

(२) **जातिस्मरत्वम्**—तत्रैव योगिनो ब्रह्मदत्तस्य जातिस्मरत्वमपि वर्णितम्।

(३) **व्यवहितविप्रकृष्टज्ञानम्**—वामनपुराणे संवरणतपत्याख्याने वरुणात्मजवसिष्ठस्य सर्वज्ञत्वं व्यवहितज्ञानं चोक्तम्। यथा—

ततः सर्वविदव्यग्रो विदित्वा वरुणात्मजः।
तपतीतापितं वीरं पार्थिवं तपसां निधिः॥
(वा० पु० २१।४१)

(४) **आकाशगमनम्**—तत्रैव वामनपुराणे वसिष्ठस्याकाशगमनं वर्णितम्। यथा—

समुत्पत्य महायोगी गगनं रविमण्डलम्।
विवेश देवं तिग्मांशुं ददर्श स्यन्दने स्थितम्॥
(तत्रैव २१।४२)

नारदीयपुराणेऽपि व्यासस्य तत्पुत्रशुकस्य चान्तरिक्षगमनं वर्णितम्। यथा शुकस्य—

स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ॥
महायोगीश्वरो भूत्वा सोऽत्यक्रामद् विहायसम्।
अन्तरिक्षचरः श्रीमान् व्यासपुत्रः सुनिश्चितः ॥
तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम्।
ददृशुः सर्वभूतानि मनोमारुतरंहसम् ॥

(ना० पु० १।६१।९-११)

व्यासस्य च—

अथ योगगतिं व्यासः समास्थाय महातपाः।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥

(तत्रैव १।६१।२६)

अत्र योगबलमाहात्म्यादाकाशगमने शुकस्य मनोमारुतवेगत्वम्, व्यासस्य च निमेषान्तरमात्रेणान्तरिक्षगमनमुक्तम्, परन्तु वर्तमानभौतिकविज्ञानसाहाय्येनाकाशाभियाने (Spacefflght) राकेटाख्यस्याकाशयानस्याधिकतमा गतिः प्रतिसैकण्डं सप्तमीलानि। अतो वर्तमानं पाश्चात्त्यभौतिकविज्ञानं प्राचीनभारतीययोगविज्ञानस्य तुलां नाधिरोहति।

(५) **रविमण्डलप्रवेशः**—वामनपुराणस्य पूर्वोक्ते (२१।४२ श्लोके) उदाहरणे वसिष्ठस्य रविमण्डलप्रवेशश्चापि निर्दिष्टः। एवं चन्द्रमण्डलादिषु प्रवेशोऽपि पुराणेषूक्तः।

(६) **लोकान्तरगमनम्**—देवर्षेर्नारदस्य संकल्पमात्रेण ब्रह्मलोकादिगमनस्य वर्णनं पुराणेषु प्राप्यत एव। विष्णुपुराणे (४।१।६७) इक्ष्वाकुवंशस्य रैवतनृपतेर्ब्रह्मलोकगमनमुक्तम्। सोमवंशीयपुरूरवसः प्रतिदिनं देवेन्द्रभवनगमनं मत्स्यपुराणे निर्दिष्टम्—

अहन्यहनि देवेन्द्रं द्रष्टुं याति स राजराट्।

(३४।२२)

(७) **निर्माणकायनिर्माणम्**—वायुपुराणे योगिभिर्निर्माणकायानां निर्माणमुक्तम्। यथा—

आत्मनः प्रतिरूपाणि परेषाञ्च सहस्रशः।
कुर्याद् योगबलं प्राप्य तैश्च सर्वैः सहाचरेत् ॥
प्राप्नुयाद् विषयांश्चैव तथैवोग्रं तपश्चरेत्।
संहरेच्च पुनः सर्वान् सूर्यतेजो गुणानिव ॥
(वायुपु०, मोरसंस्करणम्, ६६।१५२-५४)

विष्णुपुराणे चतुर्थेंऽशे द्वितीयेऽध्याये सौभर्याख्याने निर्माणकायनिर्माणमुदाहृतम्। सौभरिर्नामा मुनिः सन्तानाय निवेष्टुकामः कन्यायाचनार्थं मान्धातारं राजानं गतः। तस्य शतार्धसंख्याः कन्या आसन्। राजाज्ञया वर्षवरेण सह कन्यान्तःपुरं प्रविशन्नेव सौभरिः स्वं सिद्धगन्धर्वेभ्योऽप्यतिशयेन कमनीयं रूपमकरोत्। ताश्च पञ्चाशत्कन्या वरयित्वा स्वमाश्रममानयत्, पञ्चाशच्छरीराणि निर्माय च पृथक् पृथक् सर्वास्ताः कन्या रमयामास। मान्धाता च स्वकन्या द्रष्टुमागतः सन् सौभरिमेकान्तमुपस्थितं दृष्ट्वा प्राह—'दृष्टस्ते भगवन्नेष सिद्धिप्रभावः।'

(८) सञ्जीवनीसिद्धिः—असुरगुरुः शुक्राचार्यः सञ्जीवनीविद्याविदासीत्। स हि युधि हतान् दानवान् पुनर्जीवयितुं समर्थो वभूव—

तत्र देवा निजघ्नुर्यान् दानवान् युधि सङ्गतान्।
तान् पुनर्जीवयामास काव्यो विद्याबलाश्रयात् ॥
(म० पु०, २५।१०-११)

एतां सञ्जीवनीं विद्यां शुक्रः (उशनाः) दीर्घं तपस्तप्त्वा भगवतो महादेवात् प्राप्तवान्। हर उवाच—

तपसा परितुष्टोऽस्मि सुतप्तेन तपोधन।
तस्मात् सञ्जीवनीं विद्यां भवान् ज्ञास्यति तत्त्वतः ॥
(वाम०पु०, ६२।४३)

बृहस्पतिसुतः कचश्च शुक्रादिमां विद्यां तपसा प्राप्तवान् (म० पु० २५।५४)।

(९) वरेण प्राप्याः सिद्धयः—एवं बहुविधाः सिद्धयः पुराणेषु निदर्शिताः। एतादृश्यः सिद्धयश्च तदा न केवलं योगिभिरेव प्राप्या आसन्; अपि तु देवताभ्यः सिद्धेभ्यो योगिभ्यश्च वरान् प्राप्येतरैर्मानवैरपि सिद्धयः प्राप्ताः। भगवन्तं दत्तात्रेयमाराध्य

कार्त्तवीर्येणार्जुनेनेच्छया सहस्रबाहुत्वं स्वप्रजानां मनोऽपराधानां प्रतिकारसामर्थ्यञ्च प्राप्तम् ( म० पु० ४३।१४-२७ )। एवं शुक्रप्रदत्तवरप्रभावेण ययातिर्नृपतिः संकल्पमात्रेणैव स्वजरां स्वपुत्रे पूरौ संक्रामितवान्, पूरोश्च यौवनेन सहस्रवर्षपर्यन्तं विषयान् चचार—

एवमुक्तः स राजर्षिः काव्यं स्मृत्वा महाव्रतम्।
संक्रामयामास जरां तदा पुत्रे महात्मनि॥
पौरवेणाथ वयसा ययातिर्नहुषात्मजः।
प्रीतियुक्तो नरश्रेष्ठश्चचार विषयान् प्रियान्॥
( म० पु० ३४।१-२ )

नैतादृशाश्चमत्कारा भौतिकविज्ञानेनाद्यावधि सम्पादिताः।

## सिद्धयो वैज्ञानिका आविष्काराश्च

ननु योगजादिसिद्धिबलेन प्राचीनकाले दूरदर्शन-दूरश्रवणादिरूपा याः सिद्धयो दीर्घकालं महता कष्टेन तपश्चरणेन योगसाधनेन च सम्प्राप्या आसन्, ता इदानीं तु वैज्ञानिकानामाविष्काराणां प्रसादेन साधारणजनेभ्योऽपि सुलभाः सन्ति। टैलिविजन-रैडियो-इत्याद्याः प्रसिद्धा आविष्काराः सर्वेषु देशेषु प्रचरन्ति, तर्हि किं योगादिसाधनेन ? सत्यम्; वैज्ञानिक्या उन्नत्या ईदृशा आविष्कारा अधुना सर्वत्र सुलभप्रचारा वर्तन्ते। जनसामान्यस्य तैर्मनोरञ्जनं भवति, बहूनि कार्याणि च सिध्यन्ति, ज्ञानवृद्धिरपि जायते। एतदर्थमस्माभिः कृतज्ञैर्भाव्यम्। परन्तु वैज्ञानिकैरेभिराविष्कारैरस्माकं प्रायो भौतिकान्येव प्रयोजनानि सिध्यन्ति, नैतिक्या आध्यात्मिक्या उन्नत्याश्च साधका न तादृशा आविष्काराः सन्ति; प्रत्युत त आविष्कारा अस्माकं युवकवर्गस्य प्रायेण नैतिकपतनायैव संप्रति तिष्ठन्ति। एभिराविष्कारैश्च संसारेऽधुना सर्वत्र रागद्वेषकलहभयादीनां प्रचारो भवतीति तु सर्वविदितमेव। प्राचीनकाले तु मानवस्याध्यात्मिक्यामुन्नत्यां चरमविकासं प्रापितायामेव सिद्धयः प्रादुर्भूता आसन्। ताश्च सिद्धयो मोक्षमार्गे सहायाः परोपकारसाधनीभूताश्च प्राभवन्निति वर्तते योगजसिद्धीनां वैज्ञानिकाविष्काराणां च महदन्तरम्। अत एव योगजसिद्धयः स्पृहणीयाः; अस्माकं भारतीयसंस्कृत्याश्च साधिकाः समर्थिकाश्च सन्ति।

## आधुनिकयुगे सिद्धीनां सम्भाव्यता उपयोगश्च

एतादृश्यः सिद्धयोऽधुना बहुधनव्ययेनापि नास्मादृशैरयोगिभिः प्राप्तुं शक्याः। तर्हि कथमस्माभिराधुनिकयुगस्य समस्यानां समाधानार्थं सिद्धीनां साहाय्यमुपलभ्यमिति विचारः समुदेति, मम मते तु योगजाः सिद्धयो नास्माभिः सामान्यजनैरिदानीं लब्धुं शक्याः। जन्मौषधिमन्त्रजाः सिद्धयोऽपि पूर्वजन्मक्षपितक्लेशानामेवोपजायन्ते। तस्मात् समाधिसिद्धाविवान्यासां सिद्धीनां समाधिरेव जन्मान्तराभ्यस्तः कारणम्, मन्त्रादीनि तु निमित्तमात्राणि[1]। पुनश्च, मन्त्रजाः सिद्धयो भावं विना न प्राप्यन्ते 'यादृशी भावना यस्य सिद्धिर्भवति तादृशी'। भावयुक्तानां श्रद्धावताञ्च पुरुषाणां धनलोभेन परधन-साहाय्यग्रहणेन वा जपकर्मणि प्रवृत्तौ तेजोहानिर्भावहानिश्च स्यात्। अतो न मन्त्रसिद्धिः संभवेत्। ओषधिजाः सिद्धय एव धनसाहाय्येनांशतः प्राप्तुं शक्याः; परन्तु नायं कालो देशश्च दिव्यौषधीनां प्रभवाय साम्प्रतमनुकूलः प्रतीयते। यत ओषधिजाः सिद्धयः संभवेयुः, तथापि तासां विषये विश्वविद्यालयेष्वपरशोधसंस्थासु च प्रयोगाः कर्तुं शक्याः। दूरदर्शनदूरश्रवणदूरस्थमनोविचाराधिगमनादिसिद्धीनामपि प्रयोगाः सीमितरीत्या आसु संस्थासु कर्तुं शक्यन्ते। परन्तु सर्वे ते प्रयोगाः सात्त्विकैर्योग-रुचिभिः पुरुषैरेव कर्तव्याः। विश्वविद्यालयैः शोधसंस्थानैश्च सुसंघटितरूपेण योगशास्त्रोक्तानां सिद्धीनां विषये वैज्ञानिकं शास्त्रीयञ्च शोधकार्यमपि कर्तव्यम्। एतच्च धनसाहाय्येनैव कर्तुं शक्यते।

परन्तु सर्वैरस्माभिर्यथासंभवं यमनियमादीनामभ्यासे मैत्रीकरुणादीनां भावनासु च प्रयतितव्यमप्रमादेन। साधनस्यैव प्राधान्यं सर्वत्र चिन्तनीयम्, सिद्धि-रूपं साध्यफलं तु नास्मदधीनमिति निश्चित्य सर्वैरस्माभिः प्रशान्तेन दृढेन च मनसा अहिंसादीनां साधनमुपादेयम्। येन विश्वशान्तिः सुनिश्चिता संभवेत्। एतेषां सात्त्विक-साधनानामभावे विश्वशान्तिस्तु मृगमरीचिकैव तिष्ठेत्, वैज्ञानिकैराविष्कारैश्च महत्यशान्तिः प्रभवेदित्यलं विस्तरेण॥

---

१. द्रष्टव्या—यो० सू० ४।१–भोजवृत्तिः।

# ज्ञानात्मकसिद्धीनां पुराणोक्तं विवरणम्

श्रीरामप्रसादत्रिपाठी, प्रा०व्या०दर्शनविभागाध्यक्षः, वा० सं० वि० वि० वाराणसी।

सिद्धिपदेनात्र निबन्धे योगविशेषाभ्यासजनितशक्त्यतिशयजन्यं ज्ञानं गृह्यते, "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" [ १।४।१ ] इति योगसूत्रे श्रीमद्भागवतादौ[1] चास्य पदस्य तदर्थेऽपि प्रसिद्धत्वात्।

यद्यपि श्रीमद्भागवतेऽष्टादश सिद्धयः कथिताः, तत्राष्टौ मुख्याः, दश तु गुणजन्यत्वाद् गौण्यः। यथा—

अणिमा महिमा मूर्तेर्लघिमा प्राप्तिरिन्द्रियैः।
प्राकाश्यं श्रुतदृष्टेषु शक्तिप्रेरणमीशिता॥
गुणेष्वसङ्गो वशिता यत्कामस्तदवस्यति।
एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः॥
अनूर्मिमत्त्वं देहेऽस्मिन् दूरश्रवणदर्शनम्।
मनोजवः कामरूपं परकायप्रवेशनम्॥
स्वच्छन्दमृत्युर्देवानां सहक्रीडानुदर्शनम्।
यथासंकल्पसंसिद्धिराज्ञाऽप्रतिहता गतिः॥
त्रिकालज्ञत्वमद्वन्द्वं परचित्ताद्यभिज्ञता।
अग्न्यर्काम्बुविषादीनां प्रतिष्टम्भोऽपराजयः।
एताश्चोद्देशतः प्रोक्ता योगधारणसिद्धयः। इति,[2]

तथाप्येतासु त्रिकालज्ञत्वं परचित्ताद्यभिज्ञता दूरश्रवणं दूरदर्शनं चेति चतस्र एव ज्ञानरूपा अत्यल्पाः सन्तीति योगदर्शनप्रसिद्धा नानाविधा ज्ञानसिद्धयो दर्श्यन्ते। तथाहि—

---

१. श्रीमद्भा० ११।१५।३१–३२।

२. श्रीमद्भा० ११। १५। ४–८

(१) "परिणामत्रयसंयमादतीतानागतज्ञानम्[१]" इति सूत्रेणातीतानागतज्ञानरूपा सिद्धिरुच्यते। तथाहि—धारणाध्यानसमाधीनां त्रिकेण धर्मलक्षणावस्थापरिणामानां साक्षात्कारेणातीतानागतज्ञानं भवति। अयं भावः—योगी यदा वर्तमाने यत्र कुत्राऽपि वस्तुनि संयमं करोति, तदा तद्वस्तुनोऽतीतानागतधर्मलक्षणादिविषयकं ज्ञानमुत्पद्यते, भूतकाले कीदृशं तदासीत्, भविष्यकाले च कीदृशं भावीति सर्वं विजानाति। अत एव योगी त्रिकालदर्शीत्युच्यते।

इदं चातीतानागतज्ञानमस्मदादिप्रत्यक्षसदृशमेव। उक्तं च योगिराजेन श्रीभर्तृहरिणा—"अतीतानागतज्ञानं प्रत्यक्षान्न विशिष्यते" इति। श्रीव्यासवशिष्ठादिब्रह्मर्षीणां जनकप्रभृतिराजर्षीणामन्येषामपि तपस्वियोगिनामियं सिद्धिर्बहुशः पुराणेषु वर्णितास्ति। यथा देवर्षिणा नारदेन श्रीव्यासं प्रत्युच्यते—

अथो महाभाग भवानमोघदृक् शुचिश्रवाः सत्यरतो धृतव्रतः।
उरुक्रमस्याखिलबन्धमुक्तये समाधिनानुस्मर तद्विचेष्टितम्॥[३] इति।

अत्र समाधिपदमुक्तधारणादित्रिकपरम्, तत एवेष्टज्ञानसम्भवात्।

(२) "शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" इति सूत्रेण[४] सर्वप्राणिनां या भाषा तस्या ज्ञानरूपा सिद्धिः प्रतिपाद्यते।

गौरित्ययं शब्दः, गौरित्ययमर्थः, गौरितीदं ज्ञानमिति शब्दार्थज्ञानानामेकाकारव्यवहारदर्शनेनेतरस्येतरस्मिन्नध्यासेन तद्भेदं ज्ञातुमक्षमः संकीर्णस्वरूपं तेषां जानाति साधारणो लोकः। तत्र तेषां प्रविभागे (प्रत्येकं स्वरूपे) संयमात् प्राणिमात्रोच्चारिता भाषावगम्यते।

राज्ञः श्रीब्रह्मदत्तस्येयं सर्वभूतरुतविद्यासीत्, एकदोद्यानं गतः स पिपीलिकस्य पिपीलिकया सह कृतं संवादमवगत्य विस्मयभागभवदिति वर्णितमस्ति मत्स्यपुराणे[५]। तथाहि—

---

१. यो० द० ३।१६।

२. वा० प०—ब्र० का० श्लो०।

३. श्रीमद्भागवतम्—१।५।१३।

४. पा० यो० द०—३।१७

५. मत्स्यपु०— अ० २० श्लो० २८–२९, ३८

स कदाचिदुद्यानगस्तया सह स पार्थिवः ।
ददर्श कीटमिथुनमनङ्गकलहाकुलम् ॥
पिपीलिकामनुनयन् परितः कीटकामुकः ।
पञ्चबाणाभितप्ताङ्गः स गद्गदमुवाच ह ॥
न त्वया सदृशी लोके कामिनी विद्यते क्वचित् ।
मध्यक्षामातिजघना बृहद्वक्षोऽभिगामिनी ॥
इति तद्वचनं श्रुत्वा सा प्रसन्नाऽभवत् ततः ।
आत्मानमर्पयामास मोहनाय पिपीलिका ॥
ब्रह्मदत्तोऽप्यशेषं तं ज्ञात्वा विस्मयमागमत् ।
सर्वसत्त्वरुतज्ञत्वात् प्रसादात् चक्रपाणिनः ॥ इति ।

श्रीयोगिराजदत्तात्रेयेण स्वकुटुम्बं वधिकेन स्वायत्तीकृतं दृष्ट्वा विलपतः कपोतस्य ( पक्षिणः ) करुणालापोऽवगत इति श्रीमद्भागवतात् प्रतीयते[१] । तथाहि—

कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान् ।
भार्यां चात्मसमां दीनो विललापातिदुःखितः ॥
अहो मे पश्यताऽपायमल्पपुण्यस्य दुर्मतेः ।
अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः ॥
अनुरूपानुकूला च यस्य मे पतिदेवता ।
शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः ॥ इत्यादि ।

मन्दारनामकस्य विद्याधरस्य कन्या विभावरी स्वरोचिषे इमां विद्यां प्रदत्तवतीति मार्कण्डेयपुराणादवगम्यते ।[२] तथा च—

मन्दारविद्याधरजा नाम्ना. ख्याता विभावरी ।
उपकारिन् स्वमात्मानं प्रयच्छामि प्रतीच्छ माम् ॥
विद्यां तुभ्यं प्रदास्यामि सर्वभूतरुतानि ते ।
ययाऽभिव्यक्तिमेष्यन्ति प्रसादप्रवणो भव ॥ इति ।

---

१. श्रीमद्भाग०—स्क० ११–अ० ७, श्लो० ६७–६९ ।

२. मार्क० पु०—अ० ६४, श्लो० २–३ ।

अद्यतने वैज्ञानिके युगे तु शब्दविषये महदन्वेषणं क्रियते। अमेरिकास्थोऽपि जनष्टेलीवीजनाख्ययन्त्रेण प्रब्रुवन्नत्रत्येन जनेन साक्षात्क्रियते, तस्य शब्दाश्च श्रूयन्ते। एवमेव वानरादीनामपि भाषां ज्ञातुं जर्मन्यादिदेशे प्रयत्नाः प्रचलन्तीति श्रूयते। मन्ये तावद् वर्तमानकालिकशब्दानां विषये भूयान् प्रयत्नो विज्ञानेन कृतोऽस्ति, किन्त्वतीतानागतशब्दान् पशुपक्ष्यादिशब्दानप्युद्दिश्य तेषां ज्ञाने प्राक्तनैर्भारतीययोगिभिः सफलः प्रयासः कृत आसीत्।

भगवतः श्रीरामचन्द्रस्य वानरभल्लूकैः सह गृध्रराजेन जटायुषा च सह संवादं सर्वे जानन्त्येव। मन्ये तावल्लङ्काधिपतिराक्षसराजोपरि विजयस्येदमप्येकमद्भुतं कारणमित्यद्यत्वेऽपि भारतीयैरवश्यमियं स्वीयपूर्वविद्या प्रकाशपथं नेया, येन चीनपाकिस्तानप्रभृतिप्रतिद्वन्द्विनां निराकरणे आश्चर्यावहं सामर्थ्यं लभ्येत।

(३) एवमेव—"संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम्"[१] इति सूत्रेण प्राग्जन्मवृत्तस्य ज्ञानरूपा सिद्धिः प्रकाश्यते। तथा च— द्वये खल्वमी संस्काराः स्मृतिक्लेशहेतवो वासनारूपाः, विपाकहेतवो धर्माधर्मरूपाः, तेषु संयमात् तत्साक्षात्कारेण पूर्वस्य जन्मनो ज्ञानमुत्पद्यते। एवं वर्तमानकालिकेषु स्वपरसंस्कारेषु संयमात् स्वस्य परस्य च वृत्तान्तं जानाति—कोऽहमस्मि ? कथमेतच्छरीरलाभः ? सुखी दुःखी वेति ? एवं कोऽयमस्ति ? कथमस्यैतच्छरीरलाभः ? धार्मिकोऽधार्मिको वा ? इति। एवं भविष्यति काले कोऽहं भवितास्मि ? क्व कीदृशश्च ? एवं कोऽयं भविता ? क्व कीदृशश्च ? इति।

स्मर्यते चात्र 'पूर्वयोगिनामाख्यानम्'[२]—भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणेन दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो विवेकजं ज्ञानमभूत्। अथ भगवानावट्यस्तनुधरस्तमुवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गर्भसम्भवं दुःखं सम्पश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति।

---

१. पा० यो० सू० ३।१८।

२. व्यासभा० ३।१८।

भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु···यत्किञ्चिदनुभूतम्, तत्सर्वं दुःखमेव प्रत्यवैमि।

भगवानावट्यः—यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति ?

भगवान् जैगीषव्यः—विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तम्, कैवल्य-सुखापेक्षया दुःखमेव। बुद्धिसत्त्वस्यायं धर्मस्त्रिगुणः, त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति दुःखरूपस्तृष्णातन्तुः, तृष्णादुःखसन्तापापगमात्तु प्रसन्नमबाधं सर्वानुकूलं सुखमिदमुक्तमिति।

योगिना याज्ञवल्क्येन भाविनो रामावतारस्येतिवृत्तं पूर्वमेव निरूपितमनया सिद्ध्या। महर्षिणा वशिष्ठेन च नृपतेर्दिलीपस्य भावि सर्वं वृत्तं सन्तानप्रतिबन्धकं कामधेनुशापात्मकं संयमेन दृष्टम्।

(४) एवमेव "प्रत्ययस्य परचित्तज्ञानम्"[1] इति सूत्रेण परचित्ताभिज्ञतारूपा सिद्धिर्निरुच्यते। प्रत्ययस्य परचित्तस्य संयमेन साक्षात्करणाद् योगी विविधविषयकं परचित्तं जानाति। परकीयमनोरथज्ञानेन योग्यन्तर्यामीत्युच्यते। प्रायशः पूर्ववर्तिनो राजानः कार्तवीर्यार्जुनप्रभृतय ईदृशा आसन्, महर्षीणां तु का कथा। अत एव पुरेदृशेषु राजसु शासत्सु चौर्यादिभयं नासीत्। उक्तं च राज्ञाश्वपतिना—

न स्तेनो मे जनपदे न कदर्यो न मद्यपः।
नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः॥

देवराजेनेन्द्रेण दितेश्चित्तं परिज्ञायैव तदुदरे प्रवेशं कृत्वा तद्गर्भस्य सप्तधा कृन्तनं व्यधायि।[2] श्रूयते च—

चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः॥ इति।

---

१. पा० यो० द० ३।१९

२. श्रीमद्भागवतम्।

शिष्याणां चित्तं ज्ञात्वैव तत्रत्यसंशयान् योगबलेनाच्छिनद् गुरुरित्यस्या एव सिद्धेर्माहात्म्यम् ।

( ५ ) "प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्"[१] इति सूत्रेणापि सूक्ष्मादिविषयकज्ञानरूपा सिद्धिः प्रतिपादितास्ति । तथाहि प्रवृत्तिर्द्विविधा योगशास्त्रे प्रसिद्धा—विषयवती ज्योतिष्मती चेति । तत्र विषयाः शब्दादयः, तेषु संयमेन विप्रकृष्टाः स्थूलाः सूक्ष्माश्च शब्दादयो योगिभिर्ज्ञायन्ते । एवं ज्योतिष्मतीनाम्नी द्वितीया मनसः प्रवृत्तिः । तस्याः सत्त्वप्रकाशात्मके आलोके संयमेन सूक्ष्माणां व्यवहितानां विप्रकृष्टानां च पदार्थानां ज्ञानं भवति । दूरश्रवणदर्शनपदेनेयमेव श्रीमद्भागवते उक्तास्ति ।

(६) एवमेव "भुवनज्ञानं सूर्ये संयमात्[२], चन्द्रे ताराव्यूहज्ञानम्[३], नाभिचक्रे कायव्यूहज्ञानम्[४], ध्रुवे तद्गतिज्ञानम्[५], सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च"[६] इत्यादिभिः सूत्रैर्विभूतिपादे बहवो ज्ञानरूपाः सिद्धयः प्रदर्शिताः सन्ति । तास्तत एव विस्तरेण द्रष्टव्याः । "यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्" इति सिद्धान्तो योगिनां कृते एव सुतरां फलति, तेषां हि संकल्पानुसारिफलवत्त्वात् । अतोऽद्यत्वे भारतीयं राष्ट्रमुक्तयोगबलेनैव वैज्ञानिकसमस्यानां समाधानं विधातुं क्षमिष्यत इति । अस्माभिर्भारतीयैः सर्वथा योगबलं सम्पाद्यैव जगतः समक्षमुपस्थातव्यमिति शम् ।

ज्ञानरूपा महासिद्धिर्यस्य चेतसि राजते ।
सोऽपि लोकनमस्कार्यः का पुनः सिद्धिगा कथा ॥

---

१. पा० यो० द० ३।२५ ।

२. यो० सू० ३।२६ ।

३. यो० सू० ३।२७ ।

४. यो० सू० ३।२८ ।

५. यो० सू० ३।२९ ।

६. यो० सू० ३।४९ ।

# विभूतेरुत्पत्तिः प्राकृतनियमानुसारिणी

डा० रामशङ्करभट्टाचार्यः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि०, वाराणसी।

अथेह समासतो विमृश्यते—विभूतीनामुत्पत्तये को हेतुरिति। लौकिकशक्तेलौंकिकज्ञानस्य च सातिशय उत्कर्षो दृश्यत एव। नात्र काचिद् विप्रतिपत्तिः प्रेक्षावताम्। शरीरस्य मनस इन्द्रियाणां चालोकसाधारणोऽपि कश्चिदुत्कर्षः श्रूयते सर्वेषु शास्त्रेषु। न पुनरयमुत्कर्ष आर्षधर्मानुयायिभिरेवाभ्युपगम्यते, प्रत्युत पृथिव्यन्तरचारिभिः सर्वैर्धर्माचार्यैः। सर्वेषु देशेषु कालेषु च श्रूयमाणोऽयमुत्कर्षोऽलौकिको विभूतिरिति सिद्धिरिति वोच्यते[१]। इदानीन्तनो मनोविज्ञानपाठको नैतादृशस्योत्कर्षस्यापलापं कर्तुमर्हति। वस्तुतोऽद्य विभूत्यपलापकारी 'अर्धशिक्षितः' एव मन्यते जडविज्ञानवेत्तृभिरपि, किमुत शास्त्रविद्भिः।

शरीरेन्द्रियमनसामयमुत्कर्षो द्विधा—ज्ञानरूपः, क्रियारूपश्च। अतीतपरिणाम-

---

१. विभूतिविषय इमानि सारभूतानि वचांसि पुराणेषूपलभ्यन्ते—

ऐश्वर्यविहितं योगमैश्वर्यं योग उच्यते।
योगैश्वर्यमृते मोक्षः कथञ्चिन्नोपपद्यते॥

(ब्रह्माण्ड० २।१०।११५)

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः॥

(भाग० ११।१५।१)

नित्यानन्दमयं ज्योतिरक्षरं तमसः परम्।
ऐश्वर्यं तस्य यन्नित्यं विभूतिरिति गीयते॥

(कूर्म० ११।९४)

रुद्राः साध्यास्तथादित्या वसवोऽथ तथाश्विनौ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः॥

(वनपर्व २।८१)।

ज्ञानादयो विज्ञानरूपा विभूतय इति, परशरीरावेशादयः क्रियारूपा विभूतय इति भण्यन्ते । द्वयी चेयं सिद्धिः कथमुदेतीत्यत्र विचार्यते ।

बाह्यवस्तूनां शरीरादेर्मन इन्द्रियाणां च यादृशं स्वरूपमवगम्यते, स्थूलदृष्ट्या सर्वैः प्राणिभिः क्षिप्तैर्मूढैर्विक्षिप्तैर्वा, यदि नाम तदेव स्वरूपं तात्त्विकं स्यात्, तर्हि न कदापि विभूतेरुदयः संभवेत् । बाह्यं द्रव्यं खलु प्रकाश्यकार्यधार्यधर्मात्मकं शब्दादि-पञ्चगुणवत्, शरीरमपि सप्तधातुसंघातरूपमेव, चित्तबुद्ध्यादयोऽपि शरीरांशभूता घटादय इव स्थूलाः पदार्था बाह्यव्यवधियुक्ताः, चित्तवृत्तयो ह्यणुचाञ्चल्यमात्ररूपा इतीदं दर्शनमेव यदि तत्त्वतः सत्यं स्यात्, तर्हि न मनः कदाप्यतीतमनागतं च धर्मपरिणामं ज्ञातुं प्रभवेत्, न वेच्छामात्रेणाकाशगमनं स्याद् भारयुतस्य शरीरस्य, न वा शरीररूपादेः स्तम्भनं कर्तुं शक्येत, न वा जातिस्मरत्वं संभवेत् । परन्तु यतो हि मनसः शरीरस्येन्द्रियाणां चालौकिकं सामर्थ्यमपलपितुं न शक्यते,[१] अतो विभूतीनां कार्यकारणपरम्परा युक्तितश्चिन्तनीया, शास्त्रतो मननीया च । बाह्यवस्तुनः, शरीरस्य, मनसश्च तात्त्विकं स्वरूपमपि बोद्धव्यम् ।

बहुकालं यावदस्माभिर्विभूतिरहस्यं चिन्तितम्, अनुशीलितानि च पूर्वाचार्यवचांसि बहुधा । इदं खल्वस्माकं सुचिन्तितमभिमतं यद् विभूतिः स्वाभाविक्येव, स्वाभाविकेन प्राकृतेन ( प्रकृतिभवेन ) नियमेनैव सिद्धयो जायन्ते, नैताः सिद्धयोऽति-प्राकृताः । यो नियमः सर्वत्र समानहेतुना समानफलदायको भवति, स प्राकृतिक इति, स्वाभाविक इति वोच्यते । स्वाभाविकीं कार्यकारणपरम्परामभिलक्ष्यैव "स्वभावस्तु प्रवर्तते" इत्युक्तं गीतासु । अज्ञेयवादस्य रहस्यवादस्य च नात्र प्रवेशो भवितु-मर्हः । यथा यथा ग्राह्यस्य ग्रहणस्य च वस्तुनस्तात्त्विकं स्वरूपमवगम्यते साधनोत्कर्ष-बलेन, तथा तथा विभूते रहस्यमपि प्रकटीभवति, विशदीभवन्ति च योगशास्त्रोक्त-

---

१. उक्तं च शङ्करभगवत्पादैः—"योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलकः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्" ( शारीरकभाष्यम् १।३।३३ ) । Human Personality ग्रन्थे सूक्ष्मव्यवहितादिदर्शनस्य बहून्युदाहरणानि प्रदत्तानि ।

नियम। योगिचित्ते। कृत्स्नं खलु विभूतितत्त्वं सुचिन्तम्, सुकराश्च विभूतयः[१]। यदि कश्चिद् मनीषी आर्षीमध्यात्मविद्यां जानीयात्, मोक्षदर्शनपद्धत्या, आन्वीक्षिकी-पद्धत्या च ग्राह्यवस्तुनः, शरीरमनआदीनां च विश्लेषणं कुर्यात्, तर्हि विभूतिविज्ञानं सुज्ञेयं भवेदिति।

इतिहासपुराणादिषु स्मृतिषूपनिषत्सु चेयमध्यात्मविद्या स्पष्टमुपवर्णिता। एतद्विद्यागताः प्रमेयाः, एतद्विद्याभ्युपगतानि प्रमाणानि, एतद्विद्यासम्मतदृष्टयश्च शास्त्रेषु बहुलमुपवर्णिताः। शास्त्रगतानि विवरणस्थलान्याश्रित्यास्माभिरत्र विभूति-कारणं विव्रियते—

प्रकाश्य-कार्य-धार्य-गुणाश्रयभूतमिदं जडं परिणामि जगत् पाञ्चभौतिकमेव। भूतानि पुनराकाशादीनि शब्दाद्याश्रयभूतान्येव। एकैकधर्माश्रयाणि तानि स्थैर्यविशेष-युक्तेन मनसोपलभ्यन्ते। कश्चिदपि मेधावी प्रत्याहारबलेन यदि चतुर्णामिन्द्रियाणां रोधं कृत्वैकमेवेन्द्रियमरुद्धं कुर्यात्, तर्हि तदिन्द्रियग्राह्यगुणयुतं बाह्यं वस्तु साक्षात्कृत्य भूतविशेषं प्रतीयात्; यथा त्वगादिषु निरुद्धेषु, अरुद्धेन श्रोत्रेण यद् बाह्यं वस्तु समाधिना साक्षात्क्रियते तदेवाकाशाख्यं भूतमिति। एवं वाय्वादीनि भूतानि।

भूतान्यपि परिच्छिन्नानि सोपादानानि। स्थिरतरेण चेतसा विचाराख्य-संप्रज्ञातबलेन तदुपादानभूतानि पञ्च द्रव्याणि तन्मात्राख्यान्युपलभ्यन्ते। एकक्रियाभि-घातजन्यज्ञानमात्रमेव यदा साक्षात्क्रियते तदा तन्मात्राणां ज्ञानमुदेति चित्ते। ग्राह्यस्य जगत इदमेवान्तिममुपादानम्। सौक्ष्म्याद् यत्र शब्दस्पर्शादीनां स्वगतभेदाः प्रत्यस्तमिता भवन्ति तदविशेषशब्दादिभावाश्रयं बाह्यं द्रव्यं तन्मात्रम्; तदिदं प्रत्यक्ष-योग्यम्, नानुमेयमात्रम्। तथाहि—"चित्तस्थैर्येण स्थैर्यकाष्ठाप्राप्तेष्विन्द्रियेषु तेषां विषयात्मचाञ्चल्यग्राहकताभावे च प्रत्यस्तमयते विषयज्ञानम्। अस्तगमनात्

---

१. तुलनीयं गीतावाक्यम्—भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ इति। सर्वैश्वर्यसंपन्नो भगवान् यदि तत्त्वतो ज्ञातो भवति तर्हि विभूतिः कृत्स्नशो ज्ञाता भवतीति न संशयलेशोऽपि।

२. अध्यात्मविद्याविषय इमान्याकरस्थलानि विशेषतो द्रष्टव्यानि—शान्ति० १९४ अ०; शान्ति० ३१५। १४; ३१८।४५; २७५।१८; ३१०।१०; ३१४।३-४; ३१५।१०; अश्वमेध० ३९।२४; ४२।४१।

प्रागतिस्थिरयेन्द्रियप्रणालिकया गृह्यमाणातिसूक्ष्मवैषयिकोद्रेको यद् बाह्यं ज्ञानमुत्पादयति, तदेव तन्मात्रज्ञानम्" ( सांख्यतत्त्वालोकः, ५९ प्रक० ) इति ।

कार्यभूतानां पञ्चानां तन्मात्राणां किमुपादानकारणमिति प्रश्न उदेति। अन्तःकरणजातीयो बाह्यव्यवधिशून्यः शब्दादिगुणहीनः परिणामशीलः कश्चित् पदार्थ एव तन्मात्रकारणमिति पूर्वेऽध्यात्मविदः। पदार्थोऽयं भूतादिनामा। स चाहङ्कारद्रव्यरूप इति मोक्षदर्शनरूपे सांख्ये व्याख्यातम्। बाह्यस्य जगतः साक्षादुपादानं मनोजातीयं किमपि वस्त्विति मतमद्य जडवैज्ञानिकैरप्युररीक्रियते[1]। आपेक्षिकतावाद-( Relativity ) दृष्ट्याऽपीदमेव मतं सिद्धं भवति, यतो ह्यनया दृष्ट्या जगन्मूलभूतं वस्त्वस्पर्शयोग्यमिति ( Impalpable ) सिध्यति, तच्च मनोजातीयमेव ।[2]

तन्मात्रकारणभूतस्य द्रव्यस्य मनोरूपताम् अनुभवेन युक्त्या च साधयन्ति दार्शनिकाः ( द्र० सांख्यतत्त्वालोकः ६०—६२ प्रकरणानि )।

यत इदं बाह्यमुपादानं मनोमयम्, अतो मनोबलेन बाह्येषु द्रव्येष्वाधिपत्यं कर्तुं समर्थो भवति संयमी। अत एव सिद्धिप्रसङ्गे चित्तबलशब्दो बहुलं प्रयुज्यते योगिभिः। यथोक्तं व्यासभाष्ये—"चित्तबलव्यतिरेकेण शारीरेण कर्मणा को दण्डकारण्यं शून्यं कर्तुमुत्सहेत, समुद्रमप्यगस्त्यवद् वा पिबेत्" ( ४।१० ) इति। दृश्यते च लोके—व्यायामाभ्यासं कुर्वन् मनोयोगविशेषेण शरीरे शीघ्रं बलमादधाति व्यायामकृत्। मानसतृप्तिमतः परिपाकक्रिया साध्वी भवतीत्यायुर्वेदविदो जानन्त्येव। मनोमयत्वादेव विषयैरिन्द्रियाणि विक्रियन्ते, मनसेन्द्रियैश्च विषया गृह्यन्ते। यदि जगत् स्वरूपतो

---

१. The stuff of the world is mindstuff इति एडिंगटननामा वैज्ञानिको मन्यते—The Nature of the Physical World p. 276. The old dualism of mind and matter seems likely to disappear······through substancial matter resolving itself into a creation and manifestation of Mind ( The Mysterious Universe by James Jeans, last para. )

२. But there exists in nature an impalpable entity which is not matter, but which plays a part at least as real as prominent in a necessary implication of the theory ( Relativity by L. Bolton p. 175).

मनोमयं न स्यात्, तर्हि शब्दरूपादिज्ञानसमकालमेव सुखादयो मानसा बोधा न जायेरन् ।

मानसं जगत् कथं बाह्यरूपेण प्रतिभातीति शङ्का निःसारा । भूतादिनामकाहङ्कारस्य क्रिया यादृशी, जीवान्तःकरणेन्द्रियाणां क्रिया न तादृक्सूक्ष्मा भवति, अतो भूतादिक्रियायाः कस्यापि समष्टेर्ग्रहणं कुर्वन्ति जीवेन्द्रियाणि विक्षेपादितामसगुणयुक्तानि, न पुनः क्षणव्यापिन्या एकाया क्रियाया ग्रहणं कर्तुं तानि समर्थानि । स्तोकशो ग्रहणाद्देवाकारादिरूपो बाह्यबोध उदेति, ततश्च पूर्वकल्पीयसंस्कारानुसारेण शब्दस्पर्शादीनां कठिनताकोमलतादीनां च बोध उपजायते चित्ते । इमे सर्वे भावाः परममूले त्रैगुणिकाः सन्तोऽपि व्यवहारतो मानसा एव । सर्वप्राणिसाधारणो भूतादिनामकोऽहङ्कारः प्रजापतेर्यन्त्रकामावसायिनो जन्येश्वरस्य भगवतो हिरण्यगर्भस्य पूर्वसिद्धस्य सास्मितसमाधिमतो ग्राह्यीभूतान्तःकरणमेव । तथा च स्मृतिः—"त्रैलोक्यं सेश्वरं सर्वमहङ्कारे प्रतिष्ठितम्" ( शान्ति० २१२।१९ ) इति । ईश्वरता नामान्तःकरणधर्मः । अत ईश्वरेच्छासंभूतमिदं ब्रह्माण्डमिति कथनेऽपि जगतो मनोमयता सिध्यति ।

एतस्मादेतत् सिध्यति । सजातीयसंबन्धेन सर्वे ग्राह्यग्रहणरूपाः पदार्थाः परस्परं प्रत्याकृष्टा भवन्ति । यस्य च बलाधिक्यं भवति, सोऽन्यान् प्रति स्वप्रभावं पातयति, तान् वशीकरोति, इच्छानुसारेण व्यवहरति च । सजीवान् शारीरकोषानाश्रित्य बलवदन्तःकरणं शरीरव्यूहरूपेण तान् व्यवहरतीति प्रसिद्धमेव । अतश्चित्तबलस्याधिक्याद् बाह्यवस्तूनां चालनमतीतानागतधर्माणां ज्ञानं च संपादयितुं शक्यते । एतत्संपादनं पुनः संयमाधीनम् । संयमो योगशास्त्रस्य पारिभाषिकः शब्दः । यथोक्तं पतञ्जलिना—"त्रयमेकत्र संयमः" ( ३।४ ) इति । यया प्रक्रियया संयमोऽयं कर्तुं शक्यते, सोपदेशगम्या । न निबन्धे तस्याः प्रकटनं कर्तुं शक्यते ।

चित्तसामर्थ्यविषयेऽध्यात्मविद्भिरुक्तम्—यन्मनो विभु । "अनन्तं वै मनः" इति श्रुतिराह । अतो मनोगतं चाञ्चल्यं यथा यथाऽपाक्रियते, तथा तथा मनोजातीयानां सर्ववस्तूनां ज्ञानं स्वाभाविकमेव जायते । अल्पज्ञानमेव चाञ्चल्यादिहेतुकम्, ज्ञेयस्य वस्तुनः कृत्स्नं ज्ञानमेव प्रकाशशीलबुद्धिस्वभावसिद्धम् । ज्ञानरूपाः सर्वाः सिद्धयोऽनेन

१४

हेतुनोत्पद्यन्ते। उत्पत्तिरियं प्राकृतिकी ग्राह्यग्रहणग्रहीतॄणां त्रैगुणिकत्वात्; पुरुषोपदर्शनं खल्वेतद् व्यक्ततताया निमित्तम्।

अदेशव्यापिनी बुद्धिः सदैव सर्वबाह्याभ्यन्तरभावैः सह संबद्धैवाभिमानेन। सङ्कुचितं चेदमभिमानं चाञ्चल्यादिभिः। यदीदं चाञ्चल्यं स्थैर्येणापाकृतं स्यात्, तर्हि स्वगतबलेनैव बाह्यान् भावपदार्थान् बुद्धिरध्यवसायलक्षणा चालयितुं समर्था भवेत्; यथा विक्षिप्तो जीवः स्वदेहाङ्गानि कानिचन चालयति, तद्वत्। अचाल्यानिव प्रतीयमानान् देहांशान् यथा प्राणायामबलेन चालयितुं समर्थो भवति कश्चित्, तथैव संयमबलेन स्वबाह्यपदार्थानपि चालयितुं प्रभवति। बली ऐन्द्रजालिको यथा दर्शकान् अविद्यमानं वस्तु दर्शयति, स्वेच्छानुसारं चालयति; तथा वशी योग्यपि ग्राह्यपदार्थान् चालयितुं समर्थो भवति। सामर्थ्यमिदं त्रैगुणिकचित्तप्रभवम्। अतः प्राकृतमिति मन्तव्यमेव। सार्वज्ञ्यादीनां प्राकृतत्वादेव संयमी सर्वज्ञतादीन् विहाय त्रिगुणातीतं कैवल्यमेवाभिलषतीति ॥



# पुराणेषु योगसिद्धिविमर्शः

श्रीकृष्णमणित्रिपाठी, पुराणेतिहासव्याख्याता, वा०सं०वि०वि०वाराणसी ।

वेदेभ्य उद्धृत्य समस्तधर्मान् योऽयं पुराणेषु जगाद देवः ।
व्यासस्वरूपेण जगद्धिताय वन्दे तमेतं कमलासमेतम् ।।

पुराणानि सन्ति भारतीयसंस्कृतेः समस्तानां विद्यानां चाकरः । तत्र स्थाने स्थाने यौगिकप्रक्रियाया योगसिद्धेश्चापि समुल्लेखो विद्यते ।

योगदर्शनस्य प्रायः सर्वे विषयाः सन्ति प्रायोगिकाः । अतो दर्शनमिदं सर्वैरेवास्तिकनास्तिकैः समानं समाद्रियते । योगस्यावान्तरविषयेषु स्यान्नाम विदुषां विचारवैविध्यम् , परं क्रियांशानां प्रयोगे न कस्याप्यस्ति काचिद् विमतिः ।

यमनियमादिभिः शुद्धान्तःकरणस्तत्तद्धारणया प्राप्तसिद्धिर्योगी सर्वं कर्तुं शक्नोति । ऐन्द्रजालिकक्रियासु प्रायो दृक्शक्तिस्तम्भनप्रक्रिया दृश्यते । इन्द्रजालक्रिया-प्रदर्शकोऽनेकसंयोगवियोगरूपिणीं क्रियां प्रदर्शयन्निन्द्रजालविद्यया दर्शकानां दर्शनानि स्तम्भयति, येन द्रष्टारस्तस्य तत्तत्पदार्थसंयोगवियोगकार्यकलापं ज्ञातुमसमर्था भवन्ति ।

यथेन्द्रजालक्रीडाप्रदर्शको विविधां क्रियां प्रदर्शयन्निन्द्रजालविद्यया दर्शक-दर्शनानि स्तम्भयति, येन द्रष्टारस्तस्य तत्तत्कार्यकलापं सम्यगवगन्तुं न पारयन्ति, तथैव योगी दृक्शक्तिस्तम्भनक्रियया परकीयदृष्टितोऽन्तर्दधाति, येनोन्मीलितनेत्रोऽपि पुमान् स्तम्भितदृक्शक्तित्वान्न योगिनं द्रष्टुं शक्नोति । यदेन्द्रजालस्य साधारणक्रियया दृष्टिशक्तिः स्तम्भिता भवति, तदा योगिभिः संयमक्रियया किन्न भवितुमर्हति ?

शरीरे प्रवेशनिर्गममार्गयोर्यावत्यो नाड्यः सन्ति, तासां परिज्ञानेन चित्तस्य परशरीरे प्रवेशः सम्भवति । योगसमाधिना स्थूलशरीराच्छूक्ष्मशरीरस्य बन्धनं शिथिलं भवति । संयमद्वारा चेतसो गमनागमनमार्गीयधमनीनां परिज्ञानेन सूक्ष्म-शरीरस्य कुत्रापि प्रवेशक्रियाया निर्गमनक्रियायाश्च परिज्ञानं योगिनो जायते ।

तदानीं योगी स्वेच्छया स्वशरीरान्निर्गत्य परकाये प्रवेष्टुमर्हति, श्रीमद्भागवतस्यैकादशस्कन्धे षोडशेऽध्याये लिखितमस्ति यत् परस्य शरीरे प्रवेष्टुकामो योगी तत्रात्मानं भावयन् यथा भ्रमर एकस्मात् पुष्पात् पुष्पान्तरं प्रयाति, तथैवात्मशरीरादन्यस्य शरीरे प्रविशति—

परकायं विशन् सिद्ध आत्मानं तत्र भावयेत्।
पिण्डं हित्वा विशेत् प्राणो वायुभूतः षडङ्घ्रिवत् ॥ (११।१५।२३)

यदा योगी संयमं द्वारीकृत्य परकीयमन्तःकरणं प्रविशति, तदासौ तद्विषयेषु संयमं कुर्वाणः परकीयचित्तस्य सुविस्तृतं परिज्ञानं सम्पादयति। साधको योगक्रियायामग्रे सरन् यदा समाधिमासादयति, तदैव परकायप्रवेशयोग्यतामधिकरोति। योगी यमनियमादिनात्मबलं प्राप्य निजासनजयेन स्थूलं शरीरं विजित्य प्राणायामेन प्राणान् वशीकृत्य प्राणमयकोशसहितं सूक्ष्मदेहं स्थूलदेहान्निस्सार्य प्राणशक्तिद्वारा परकायप्रवेशस्य ततो निर्गमनस्य च शक्तिं लभते। कस्यापि जीवस्यान्तःकरणभावं जिज्ञासमानो योगी तदीयज्ञानविशेषे संयमं विदधानः स्वकीयान्तःकरणं परकीयान्तःकरणसम्बद्धं विधाय परेषामन्तःकरणभावं गृह्णाति।

यथा मधुकरराजो यत्र यत्र गच्छति, तत्र तत्रान्या अपि मधुमक्षिकाः सहैव गच्छन्ति, तथैव परकायप्रवेशसमये जीवेन सह तदीयानीन्द्रियाण्यपि गच्छन्ति। परस्य काये प्रतिष्ठो योगी तत्र स्वशरीरवद् व्यवहरति। संयमद्वारा समानवायोर्विजयेन योगी तेजःपुञ्जमयो जायते। यतः समानवायुः समत्वमुत्पादयति। समत्वेन च गुणेन साधके सर्वाः शक्तयः समाकृष्यन्ते। यथा मर्यादावान् समभावसम्पन्नः समुद्रो भूमिस्थितान् जलराशीन् नदीद्वारा स्वस्मिन् समाकर्षति, यथा वा समदर्शी भगवान् भास्करः स्वकीयकिरणैरितस्ततो विकीर्णान् रसान् स्वस्मिन् समाकर्षति, तथैव शरीरस्थितः समानो वायुः स्वरूपतो वियुज्यमानो विकीर्णां तेजःशक्तिं समाकृष्य योगिनः शरीरं तेजोमयं विधत्ते। यथा वैज्ञानिका यन्त्रक्रियाद्वारा प्राणिनां छायारूपचिह्नानां धारणशक्तिं समुत्पाद्य फोटोग्राफनामके यन्त्रे मनुष्यादीनां मूर्तीर्यथावत् प्रकाशयन्ति, तथैव योगिनोऽपि पूर्वजन्मसंस्कारेषु संयमेन पूर्वजन्मज्ञानं परजन्मसंस्कारेषु च संयमेन परजन्मज्ञानं कर्तुं प्रभवन्ति।

यथा रूपविषयकसंयमेन योगिनः शरीरस्वरूपं केनापि द्रष्टुं न शक्यते, तथैव शब्दविषयकसंयमेन श्रोत्रग्राह्यशक्तिरपि स्तम्भिता भवति। येन योगिनः समुच्चारित-शब्दमपि न कश्चिच्छ्रोतुमर्हति। एवं स्पर्शरसगन्धानां संयमेन योगिनः शरीरस्य स्पर्शरसगन्धानपि पार्श्वस्थः पुरुषो नावगन्तुं प्रभवति।

यथा समेषां शब्दानामाश्रय आकाशः, तथैव समस्तानां प्राणिनां कर्णेन्द्रिया-धारोऽप्याकाश एव। यथा दाहिकया शक्त्या साकं पावकस्य संबन्धः, तथैव शब्देन सहाकाशस्य संबन्धो विद्यते। आकाश एकस्मिन् स्थाने समुच्चरितः शब्दः स्थानान्तरं गच्छति। यतस्तयोर्मध्य आकाशातिरिक्तं किमप्यन्यन्नास्ति। अतः शब्दाधार आकाश एव सिध्यति। कर्णेन्द्रियस्याकाशसंबन्धादेव शब्दः श्रूयते। पिहिते कर्ण आकाशसंबन्धा-भावान्न शब्द समाकर्ण्यते। अत आकाशेन सह कर्णेन्द्रियस्यास्ति साक्षात् संबन्ध इति निश्चीयते। आकाशस्यावरणराहित्यात् सर्वव्यापित्वे नास्ति कश्चित् सन्देहलेशः। तथा च कर्णेन्द्रियाकाशयोराश्रयाश्रयिभावसंबन्धे संयमेन योगिना दिव्या शक्तिरधिगम्यते। यया सूक्ष्मादपि सूक्ष्मो निगूढादपि निगूढोऽतिदूरस्थोऽपि शब्दः श्रूयते योगिना।

स्थूलशरीराकाशयोः संबन्धे संयममनुतिष्ठन् योगी यदा लघुतरतूलादिपदार्थेषु धारणां कुर्यात्तदा तस्मिन् लघुत्वसिद्धिर्जायते। तया योगी यथेच्छमाकाशे भ्रमति तिष्ठति स्थानात् स्थानान्तरञ्च गन्तुं प्रभवति।

यदा योगी संयमेन भूतानां विजयं कुरुते, तदा स्वत एव प्रकृतिस्तदधीनतां प्रतिपद्यते। यथा गावः स्ववत्सान् स्वतो दुग्धं पाययन्ति, तथैव पञ्चमहाभूतविजयेन वशीभूता प्रकृतिः स्वयमेव योगिनं सेवते।

सिद्धिर्द्विविधा—परा, अपरा च। तत्र विषयसंबन्धिन्योऽपराः सिद्धयो मुमुक्षुभि-र्योगिभिर्हेयाः। स्वस्वरूपानुभवोपयोगिनी परा सिद्धिः। तत्र परासिद्धिस्तदुपयोगिन्यश्च सिद्धयो योगिभिरुपादेयाः, हेयाश्च विषयसंबन्धिन्योऽपरा सिद्धयः। यदि साधक-स्तीव्रवैराग्ययुक्तो मनसः सुदृढतया योगैश्वर्येभ्यो मुखं परावर्तयन् तत्र न मुह्यति, तर्हि शान्तिमयं तत्स्थानं प्राप्नोति, यत्र गमनेन निखिला अपि मनोवासनाः पूर्णतामापद्यन्ते। सत्त्वगुणप्रभावेण रजस्तमोमलेऽपसारिते, अन्तःकरणे च निर्मलतामुपगते ऋतम्भ-राख्या पूर्णज्ञानमयी बुद्धिरुदयते। मलमलीमसेऽन्तःकरणे भगवत्साक्षात्कारो

न संभवति, अपि तु मलराहित्याद् निर्मलमन्तःकरणं भगवद्दर्शनाय समर्थं भवति। साधनवैराग्याभ्यां पक्षाभ्यामुड्डीयमानः साधको हंस आत्मदर्शनसामर्थ्यं लभमानस्तीव्रवैराग्योदयाद् विविधे चाकचिक्ये ग्रस्तो न भवति, अपि तु शनैः शनैर्भगवद्दर्शनाधिकारी भवन् परं कल्याणस्वरूपं कैवल्यपदमासादयति, यदा सत्त्वगुणस्य प्रबलप्रवाहाद् रजस्तमसो मलं पूर्णरूपेणापसर्पति, तदा पुरुषः स्वकीयं यथार्थस्वरूपमधिगच्छति। यथैकोऽग्निस्फुलिङ्गोऽनेकानग्निस्फुलिङ्गानुत्पादयति, तथैव योगबलेनैकमन्तःकरणमनेकत्वं प्रतिपद्यते। महत्तत्त्वमधिगच्छन् योगी यथेच्छमनेकान्यन्तःकरणानि स्रष्टुमर्हति। योगसाधनेन स्वस्वरूपज्ञानमधिगतवतात्मज्ञानिना योगिना सिद्धयः स्वत एव प्राप्यन्ते। यद्यपि स्वरूपोपलब्धौ सत्यां साधकः प्रकृतिलीलया न पुनर्ग्रस्यते, परन्तु व्युत्थानदशाजनितासु सिद्धिषु समाकृष्टः सन् जडभरतवद् विपन्नो भवितुमर्हति। अतो मुमुक्षुभिर्योगिभिः सिद्धयो हेया एव।

योगशास्त्रे साधकस्त्रिविधोऽभिमतः—अधमो मध्यम उत्तमश्च। तत्र साधनपथेऽग्रे सरन् सिद्धिभोगी साधकोऽधमो निगद्यते। सिद्धीरवलोकमानोऽपि तद्भोगपराङ्मुखो मध्यमः। यस्तु न कथञ्चित् सिद्धिमीक्षते, नापि समीहते स उत्तमः। अतः परवैराग्यसनाथ उत्तमसाधक एव कैवल्यस्य सर्वथाधिकारी, तेनैव च त्वरितं कैवल्यमासाद्यते।

यथावद् योगसाधनानुष्ठानेन ज्ञानोदये योगिनामन्तःकरणतो निखिलः सन्देहो दूरीभवति। अतो योगिनो यथेच्छं समेषां वस्तूनां यथार्थज्ञानं जायते। योगी यत्रैव स्वीयां ज्ञानदृष्टिं प्रसारयति, तत्रैव तस्य बुद्धिर्देशकालपरिच्छेदरहिताऽभ्रान्ता सती प्रयाति, तया च तत्र त्रिकालदर्शित्वमुपपद्यते।

यदा साधको मनःप्राणमिन्द्रियाणि च वशे कृत्वा स्वकीयं चित्तं परमात्मनि नियोजयति, तदेश्वरं भावयतस्तस्य समक्षं बह्वयः सिद्धय उपतिष्ठन्ते। तदुक्तं श्रीमद्भागवते महापुराणे—

जितेन्द्रियस्य युक्तस्य जितश्वासस्य योगिनः।
मयि धारयतश्चेत उपतिष्ठन्ति सिद्धयः॥ (११।१५।१)

सिद्धीरेताः समुपलभ्य योगिभिः सर्वं कर्तुं शक्यते। पाषाणे प्रवेष्टुं पार्यते, आवरणरहिते वियत्यपि तिरोहितेन भूयते, पञ्चापि भूतानि योगिनां क्लेशदानि न

भवन्ति। योगी शिलायां प्रवेष्टुमर्हति, जलं तमार्द्रं कर्तुं न शक्नोति, पावकस्तदीयं शरीरं न दहति। न च वायुः शुष्कं कर्तुमर्हति। इमा अष्टौ सिद्धय ईश्वरीयाः सन्ति। एताभिर्योगिन ईश्वरस्वरूपतां प्रतिपद्यन्ते। ईश्वरानुकम्पयैवैताः समधिगम्यन्ते।

अष्टसु सिद्धिषु तिस्रोऽणिमा-महिमा-लघिमासिद्धयस्तु शारीरिक्यः सन्ति। एका प्राप्तिरैन्द्रियकी सिद्धिरस्ति। इच्छानुसारं लौकिकपारलौकिकपदार्थानुभाविका प्राकाम्यसिद्धिः। मायायास्तत्कार्यस्य च सञ्चालनमीशिता शक्तिः गुणेष्वसङ्गो वशिता सिद्धिः। स्वेच्छया कामनासुखप्राप्तिः कामावसायितानाम्न्यष्टमी सिद्धिः। एता अष्टापि सिद्धयो मयि स्वभावत एव तिष्ठन्ति। येभ्योऽहं ददामि तैरंशतः प्राप्यन्ते। तथा चोक्तं श्रीमद्भागवते—"एता मे सिद्धयः सौम्य अष्टौ चोत्पत्तिका मताः" (११।१५।५)।

एतदतिरिक्ता अनूर्मित्व-दूरश्रवण-दूरदर्शन-मनोजवत्व-कामरूपत्व-परकाय-प्रवेशन-स्वच्छन्दमृत्यु-अप्सरोभिः सहासिका-देवक्रीडादर्शनसंकल्पसिद्धि-अप्रतिहत-गत्याज्ञा इतीमा दश सिद्धयः सत्त्वगुणस्य विशेषविकासाद्भवन्ति। त्रिकालज्ञत्व-द्वन्द्वराहित्य-परचित्ताद्यभिज्ञता-अग्नि-सूर्य-जल-विषादीनां शक्तिप्रतिष्टम्भनत्व-अपराज-यत्वानीत्येताः पञ्च सिद्धयो योगिनां भवन्ति।

किञ्च, कया धारणया कीदृशी सिद्धिरवाप्यत इत्यपि तत्र विस्तरतो वर्णितम्, योगधारणाभिः प्राप्यमानसिद्धीनां नामनिर्देशोऽपि कृतोऽस्ति। तथा हि—यः पञ्चभूतानां सूक्ष्मास्तन्मात्रा ईश्वरशरीरमिति बुद्ध्या तन्मात्रकं मे शरीरमिति भावयन् साधकोऽणिमानं सिद्धिं प्राप्नोति। यः स्वीयं मनो महत्त्वाकारं कृत्वा महत्तत्त्वरूपेण मां ध्यायति, स महिमानं सिद्धिमवाप्नोति। यो वाय्वादीनां चतुर्णां भूतानां परमाणून् मदात्मकान् मत्वा चित्तं तदाकारं कुरुते, स लघिमानं सिद्धिं प्राप्नोति। यः सात्त्विक-महङ्कारं मत्स्वरूपं मत्वा तत्र धारणां करोति, स प्राप्तिं सिद्धिं प्राप्नोति। यो महत्यात्मनि मयि मानसं धारयति, स प्राकाम्यसिद्धिमवाप्नोति। ययेच्छानुसारं सर्वे भोगा लभ्यन्ते, यः कालस्वरूपे विश्वरूपे मयि धारणां करोति, स ईशित्वसिद्धिमवाप्नोति। अनया जीवान् स्वेच्छया प्रेरयितुं सामर्थ्यमुपलभ्यते। यस्तुरीयाख्ये भगवति नारायणे मयि मनो धारयति, स वशित्वसिद्धिं लभते। यो निर्गुणे ब्रह्मणि मयि नैजं निर्मलं मनो धारयति, स कामावसायित्वसिद्धिं प्राप्नोति, यया तस्य सर्वाः कामनाः पूर्णा भवन्ति। श्वेतद्वीपपतौ शुद्धधर्ममये मयि चित्तं धारयन् योगी षडूर्मिरहितो भवति।

य आकाशात्मनि मयि मनसा सहानाहतनादं चिन्तयति, स दूरश्रवणसिद्धिं लभते। यो योगी नेत्रं सूर्ये, सूर्यञ्च नेत्रे संयोज्य मां मनसा ध्यायति, स सूक्ष्मदृग् सन् दूरदर्शनसिद्धिमवाप्नोति। यया स समस्तं विश्वं पश्यति। यो मनो देहं च प्राणैः सह मयि संयोज्य मम धारणां कुर्यात्तर्हि मनोजवत्वसिद्धिं लभते। अनया यत्रेच्छति तत्र तत्क्षणे समुपगच्छति। यो योगी मन उपादाय (उपादानकारणं कृत्वा) यद्यद् रूपं बुभूषति तत्तदनुकूलं रूपं धत्त इत्येषा कामरूपसिद्धिः। परकायप्रवेशमिच्छन् योग्येवं भावयेद् यदहं तस्मिन्नेव शरीरेऽस्मि। एवं भावनया तस्य प्राणवायुर्यथा भ्रमर एकं पुष्पं परिहृत्य पुष्पान्तरं गच्छति, तथैवात्मशरीरं त्यक्त्वा परकाये प्रविशति (११।१५।४–२३)।

सकामानां साधकानां हिताय नानाविधानां सिद्धीनां वर्णनं पुराणेतिहासयोर्योगशास्त्रेषु चोपलभ्यते। सिद्धीनामनेकेषु भेदेषु सत्स्वपि योगदर्शनस्य विभूतिपादे भगवता पतञ्जलिना सिद्धेस्त्रयस्त्रिंशद्भेदाः समाम्नाताः। तास्वष्टौ सिद्धयो मुख्याः सन्ति। पञ्चमहाभूतविजयानन्तरमणिमादयो पूर्वोक्ता अष्टौ सिद्धयः स्वयमुपतिष्ठन्ते।

योगसाधनेन स्वस्वरूपोपलब्धौ जातायामपि पूर्वसंस्कारजन्यां व्युत्थानदशामधिगतवता योगिना सिद्धयः स्वत एव प्रतिपद्यन्ते। वस्तुतः समाधिजन्ये मुक्तिपदं सिद्धयो विघ्नकारिण्य एव सन्ति। अत एव चञ्चलचेतसो योगिन एव सिद्धिमपेक्षन्ते। सर्वा अपि ताः समाधेर्नित्यानन्दशुद्धाद्वैतदशायां प्रत्यूहजनिका एव। अत एव योगिनं सावधानीकर्तुं भगवता पतञ्जलिना विभूतिपादे—"ताः समाधावुपसर्गा व्युत्थाने सिद्धयः" (३।३७) इति योगसूत्रमाविष्कृतम्। यद्यपि स्वस्वरूपोपलब्धौ सत्यां साधकः प्रकृतिलीलया न पुनर्ग्रस्तुं शक्यते, तथापि व्युत्थानदशाजनितासु सिद्धिषु समातिष्ठन् जडभरतवद् विपन्नो भवितुमर्हतीति प्राधान्येन समुन्नतयोगिनं सावधानीकर्तुं सिद्धान्तोऽयं निर्णीतः। अतो लौकिक्योऽलौकिक्यश्च सर्वविधा अपि सिद्धयो मुमुक्षुभिर्हेया एव। तथा चोक्तं श्रीधीशगीतायाम्—

महतो ज्ञानिनश्चैव योगिनोऽपि तपस्विनः।
सिद्धिसार्थैरनेकैर्हि मोहयन्ती निरन्तरम्॥
आवागमनचक्रेऽस्मिन् स्वविलासात्मके मुहुः।
मोक्षमार्गं च रुन्धाना घूर्णयेद्धै समन्ततः॥

वस्तुतः सिद्धयः परमार्थमार्गे बाधिका एव सन्ति । अतः सिद्धिर्न वाञ्छनीया, तत्प्राप्त्या मुमुक्षुयोगिनां योगमार्गेऽन्तराया आविर्भवन्ति । सिद्धिभ्यः सकामानां साधकानामभ्युदयस्त्ववश्यं भवति, परन्तु मुमुक्षूणां कृते बाधिका एव भवन्ति ता न साधिकाः—

सर्वस्याभ्युदयस्यापि बीजेषु योगसिद्धिषु ।
मत्सायुज्यदशाप्राप्तौ बाधिकास्ता न साधिकाः ॥४।१३॥

यस्य चित्तवृत्तिर्भगवदुन्मुखा न भवति, यस्मिन्नल्पीयस्यपि विषयासक्तिर्विद्यते, एवम्भूतेन पुंसा यदि सिद्धय उपलब्धाः स्युः, तर्हि ताभिस्तस्याभिमानं वर्धते । विषयप्राप्तौ भोगे च सिद्धीनामुपयोगो भवति, येन भोगे बाधाया आशङ्कोपतिष्ठते । तस्या विनाशे सिद्धय उपयुज्यन्ते । परिणामे साधकः कंस-रावण-हिरण्यकशिपुवदसुरभावापन्नतया क्रूरो भवति । अतः प्राप्तासु सिद्धिषु साधकस्तत्र न रमेत; अपि तु ता विघ्नरूपा मत्वा परित्यजेत् । अत एव साधका ब्रह्मलोकभोगमपि प्राप्य ब्रह्मसामर्थ्यं वोपलभ्य सिद्धिभ्यः पृथक् तिष्ठन्ति । तेषां कृते वास्तविकी सिद्धिस्त्वन्तःकरणस्य सम्यक् शुद्धिरेवास्ति । यत्र भगवदतिरिक्तस्य कस्यापि स्थानं नास्ति । तदुक्तं श्रीमद्भागवते—

अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ।
मया सम्पाद्यमानस्य कालक्षपणहेतवः ॥
जन्मौषधितपोमन्त्रैर्यावतीरिह सिद्धयः ।
योगेनाप्नोति ताः सर्वा नान्यैर्योगगतिं व्रजेत् ॥

(११।१५।३३-३४)

योगसूत्रे "जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" (४।१) इति सूत्रयता भगवता पतञ्जलिना तु पञ्चविधाः सिद्धयः प्रोक्ताः । तत्र जन्मतः सिद्धिर्यथा परमहंसशुकदेवे महर्षिकपिलादौ च जन्मत एव सिद्धिरुत्पन्ना । औषधादिनापि सिद्धयः समुत्पद्यन्ते । यथा रसायनादिना ताम्रसुवर्णनिर्माणं कायाकल्पकरैरौषधैश्च जरानाशपूर्वकं दीर्घायुष्ट्वप्राप्तिर्यथा महर्षेश्च्यवनस्य । मन्त्रैरपि सिद्धिः प्राप्यते ।

१५

यथा गुटिकादिसिद्धिद्वारा आकाशगमनम्, तान्त्रिकमन्त्रसाधनेन मारणम्, वशीकरणम्, उच्चाटनादिकार्यञ्च। तपसापि सिद्धिरधिगम्यते। यथा तपःसाधनेन विश्वामित्रस्य ब्राह्मणत्वाधिगमः, भक्तप्रधानस्य नन्दिकेश्वरस्य मनुष्यतो देवत्वप्राप्तिश्च। समाधितः सर्वविधसिद्धिलाभस्तु तृतीयपादे विस्तृतः प्रदर्शितः। सर्वा अपि सिद्धयः समाधिसिद्धेर्भिन्नस्वरूपा एव। यतः सर्वासामपि साहाय्यकारि साधनं समाधिरेव। यतः शुकदेवादिभिः प्राक् साधनानि कृतानि, अतो वर्तमानजन्मनि सिद्धिरधिगता। औषधादिनापि शरीरं तादृशमेव जायते यादृशं समाधिना संपद्यते।

राज्ञः शर्यातेः कन्यया सुकन्यया बालसुलभचापल्येनारण्ये यदा महर्षेश्च्यवनस्य चक्षुषी कण्टकेन विद्धे, तदा शर्यातेः सैनिकानां शकृन्मूत्रनिरोधोऽभवत्। तदुक्तं श्रीमद्भागवते—"शकृन्मूत्रनिरोधोऽभूत् सैनिकानां च तत्क्षणात्" (९।३।५)।

अपि च शर्यातेः सोमयज्ञे महर्षिणा च्यवनेन स्वतपःप्रभावेणासोमकावप्यश्विनीकुमारौ सोमं पायितौ, तदसहमानो देवराजस्तौ हन्तुं यदा वज्रमाददे, तदा महर्षिश्च्यवनः सवज्रमिन्द्रस्य बाहुं स्तम्भयामास—

हन्तुं तमाददे वज्रं सद्यो मन्युरमर्षितः।
सवज्रं स्तम्भयामास भुजमिन्द्रस्य भार्गवः॥
(९।३।२५)

इदं सर्वं पर्यालोच्य महर्षेश्च्यवनस्य तपःसिद्धौ न कश्चिदस्ति सन्देहः।

भगवन्तं रामं परावर्तयितुकामाय सेनापरिजनयुताय भरताय सिद्धैश्वर्येण भरद्वाजेन महर्षिणा विहितं सार्वभौमेनापि राज्ञा विधातुमशक्यमातिथ्यं दर्शं दर्शं कस्य सचेतसो योगसिद्धिविषये सन्देहकलङ्कपङ्कलेशः संभवेत्?

श्रीरामं साक्षात्कर्तुं चित्रकूटगमनसमये तीर्थराजे प्रयागे भरद्वाजाश्रमे निवासाय कृतमतिं भरतं भरद्वाजो निमन्त्र्य यज्ञशालां प्रविश्य आचम्य नेत्रे प्रमृज्य प्रणम्य च निखिलशिल्पकलाकोविदं विश्वकर्माणमाहूयातिथ्यसामग्रीसम्पादनाय समाज्ञप्तवान्। अथ महर्षिणाज्ञप्तः स तत्कालं विविधां शयनासनापवेशनादिभिरद्भुतामातिथ्यसामग्रीमुपस्थापयामास। मानवमात्रदुर्लभानातिथ्यसामग्रीसम्भारान् समालोक्यायत्नसिद्धत्वात्,

अपूर्वत्वात्, अत्याश्चर्यजनकत्वात्, द्रागुत्पन्नविविधविचित्रवस्तुसमूहत्वाच्च सर्वे विस्मिता अभूवन्।

तत्तत्पुराणेषु विश्वामित्रवशिष्ठयोरनेकाः सिद्धयः कस्याश्चर्यजनिका न भवन्ति। तपःसिद्धिप्रभावादेव विश्वामित्रेणाभिनवा सृष्टिः कृता, स्वर्गात् पात्यमानोऽपि त्रिशङ्कुरन्तराले स्थापितः।

"आज्ञा गुरूणामविलङ्घनीया" इति सिद्धान्तेन पितुर्यमदग्नेराज्ञया मातू रेणुकायाः परशुरामेण शिरसि छिन्ने आज्ञापरिपालनात् प्रसन्नेन पित्रा यमदग्निना तपःसिद्ध्या रेणुका पुनरुज्जीविता। तपःसिद्धिप्रभावेणैव राज्ञा भगीरथेन भव्या भगवती भागीरथी भूतले समानीयास्माकं दृग्गोचरीकृता। तपःसिद्ध्यैवागस्त्येन दुर्धर्षोऽपि समुद्रश्चुलुकीकृतः। समाधिसिद्धेः पूर्णः प्रभावो दधीचिमुनिद्वारा स्वास्थिप्रदानसमये दृश्यते। सादरं देवैः प्रार्थित इन्द्रस्य वज्रनिर्माणार्थं परोपकारबुद्ध्यास्थिप्रदानायोद्यतो महर्षिर्दधीचिर्यदा परे ब्रह्मणि मनः संयोज्य समाधाववस्थितः, तदा स गतं शरीरमपि नाज्ञातवान् ( श्रीमद्भागवते ६।१०।१२ )। धन्या खल्वस्माकं पूर्वजा ये परोपकाराय स्वशरीरस्थमस्थ्यपि सहर्षं प्रायच्छन्, किमुत धनादिकम्।

मैथिलीमन्वेष्टुं लङ्कां गच्छतो भगवतो हनुमतो मध्येसमुद्रं सुरसया सह जाते साक्षात्कार एकस्यापरापेक्षया द्विगुणितां कायवृद्धिं दर्शं दर्शमुभयोः कायवृद्धिसिद्धौ न भवितुमर्हति कस्यापि कापि विचिकित्सा। पुनरग्रे सिंहिकासाक्षात्कारे "संक्षिप्य मुहुरात्मानं निपपात महाकपिः" (१।१८३)। भूयो लङ्काप्रवेशसमये तां दुष्प्रवेश्यां मत्वा देहं संक्षिप्य मार्जारमात्रशरीरो भूत्वा प्रविवेश। एवमशोकवाटिकायां सन्दिहानायाः सीतायाः समक्षं कामावसायित्वसिद्धिं प्रदर्शयितुमुद्यतो भगवान् हनूमानुवाच—

न मे जानाति सत्त्वं वा प्रभावं वासितेक्षणा।
तस्मात् पश्यतु वैदेही यद्रूपं मम कामतः॥ २६।३४॥

एवं लङ्कायां यत्र तत्र हनूमतः शरीरस्य संकोचविकासौ दृष्ट्वा तत्राष्टविधसिद्धिसद्भावे न कश्चिदस्ति सन्देहलेशः। योगसिद्धिप्रभावात् प्रकृतिर्योगिनां वश्या भवति, प्रकृतेस्तद्वश्यत्वाद् योगिभिः कायस्य महत्त्वह्रस्वत्वादिकं सर्वं कर्तुं पार्यते।

योगसिद्धिषु बह्व्यः सिद्धय आत्मज्ञानिनां योगिनामेव भवन्ति, कियन्त्योऽज्ञानिनामपि भवन्ति। आत्मज्ञानहीनाः साधकाः सिद्धिमुपगता भ्रष्टा भवन्ति। यतस्ते सांसारिकसुखप्राप्तये ता उपयुञ्जते, परिणामे आत्मोन्नतिच्युतास्ते भवन्ति, किन्त्वात्मवेत्तार आत्मोपलब्धौ सदाग्रेसरीभवन्त्येव। अत एवोक्तं हरिवंशे हरिवंशपर्वणि—"योगो हि दुर्लभो नित्यमल्पप्रज्ञैर्न संशयः" ( १८।१५ )।

वस्तुतः पुराणसिद्धान्तानुसारं सर्वैश्वर्यसम्पन्नस्य भगवतोऽनुकम्पया शमदमादिसम्पन्नेषु यमनियमादिना विशुद्धहृदयेषु भगवद्भक्तेषु सर्वाः सिद्धयोऽनायासमेवोपतिष्ठन्ते। अत एव पर्वतात् पात्यमानस्यापि प्रह्लादस्य न कापि क्षतिरजायत, नापि हस्तिना ताड्यमानस्य तस्य कापि वेदनाभवत्, न च विषमोदकभक्षणेनापि किञ्चिदनिष्टं जातम्, न वा ब्रह्मणः प्राप्तवरयापि होलिकया सहाग्नौ दह्यमानस्य तस्य शरीरं दग्धुं वह्निः प्राभवत्। पुराणेषु स्थले स्थलेऽवतारधारिणां रामकृष्णादीनां महापुरुषाणां सिद्धेर्दर्शनं तु बोभूयत एव।

ब्रह्मवैवर्तपुराणे श्रीकृष्णजन्मखण्डे द्वाविंशतिधा सिद्धयो नामग्राहं ग्राहिताः। ता यथा—१—अणिमासिद्धिः, २—लघिमासिद्धिः, ३—प्राप्तिसिद्धिः, ४—प्राकाम्यसिद्धिः, ५—महिमासिद्धिः, ६—ईशित्वसिद्धिः, ७—वशित्वसिद्धिः, ८—कामावसायित्वसिद्धिः, ९—दूरश्रवणसिद्धिः १०—परकायप्रवेशसिद्धिः, ११—मनोजवित्वसिद्धिः, १२—सर्वज्ञत्वसिद्धिः, १३—अभीष्टसिद्धिः, १४—अग्निस्तम्भनसिद्धिः, १५—जलस्तम्भनसिद्धिः, १६—चिरजीवित्वसिद्धिः, १७—वायुस्तम्भनसिद्धिः, १८—क्षुधापिपासानिद्रास्तम्भनसिद्धिः, १९—वाक्सिद्धिः, २०—मृतानयनसिद्धिः, २१—सृष्टिकरणसिद्धिः, २२—प्राणाकर्षणसिद्धिश्च।

तदनन्तरं सर्वसिद्धिप्रदां मन्त्रसिद्धिमुद्दिश्य तत्प्राप्त्युपायोऽपि तत्र दर्शितः—

अनेन योगिनः सिद्धा मुनीन्द्राश्च सुरास्तथा।
शतलक्षजपेनैव मन्त्रसिद्धिर्भवेत् सताम्॥

एवं मार्कण्डेयपुराणस्य चत्वारिंशदध्याये सलक्षणमष्टसिद्धीनामुल्लेखः कृतोऽस्ति ( ४०।३०—३४ )।

शिवपुराणे उमासंहितायां षड्विंशाध्याये सप्तविंशाध्याये च सिद्धीनां स्वरूपं फलञ्च प्रदर्शितमस्ति। तत्रोक्तं यत्—"यः प्रतिदिनमेकाग्रचेतसा ओङ्कारस्याभ्यासं करोति तस्य किञ्चिदप्यसाध्यं न भवति; मनोवाञ्छिताः सिद्धयो जायन्ते, सः सर्वज्ञः समदर्शी स्वेच्छानुसारं रूपं धृत्वा सर्वत्र विहरति, कदाचिदपि विकारैर्नाभिभूयते। स साक्षाच्छिव एव भवति, इत्यत्र न काचित् संशीतिः"।

"भ्रुवोर्मध्ये ललाटवर्तिनं बालसूर्यतेजसमग्निं साक्षात्कृत्य योगी इच्छानुसारं रूपधारणसामर्थ्यवान् सन् यथेच्छं शरीरं धृत्वा क्रीडति। स कारणतत्त्वं शान्त्वयित्वान्यशरीरे च प्रवेष्टुमणिमादिसिद्धीः प्राप्तुं सर्वं द्रष्टुं दूरस्थं शब्दं श्रोतुमाकाशे विचरितुं च सिद्धीः प्राप्नोति। सूर्यप्रभवं महाज्योतिर्मयं महापुरुषं मां ज्ञात्वा साधको मृत्युमतिक्राम्यति, मोक्षलाभाय ततोऽन्यो न कश्चिद् मार्गोऽस्ति" (२७।२५)।

महाभारते तु स्थले स्थले योगसिद्धेः प्रभावो दृश्यते, विशेषतः शान्तिपर्वणि (३१०) अध्याये सिद्धेश्चर्चा कृतास्ति। योगसिद्धिप्रभावादेव व्यासेन सञ्जयाय दिव्यदृष्टिः प्रदत्ता, यो दूरस्थोऽपि समस्तं महाभारतयुद्धमपश्यत्।

यद्यप्यद्यत्वे सिद्धिप्राप्तये यतमाना अपि बहवो देशकालयोर्वैपरीत्यात्, परिस्थितेः पारवश्यात्, विशुद्धसाधनाभावात्, सम्यग् यमनियमादियोगाङ्गाननुष्ठानाच्च पूर्ववत् सिद्धिं न लभन्ते; तथापि निर्मलेनान्तःकरणेन हार्दिकेन च भावेन तदर्थं भूयो भूयो यतनीयमेवावश्यम्॥



# भोजनपानादिसिद्धयः

श्रीव्रजवल्लभद्विवेदः, अनुसन्धानसंस्थानम्, वा० सं० वि० वि०, वाराणसी ।

आतापिर्भक्षितो येन वातापिश्च महाबलः ।
समुद्रः शोषितो येन तमगस्त्यं नमाम्यहम् ॥
अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् ।
आहारपरिपाकार्थं स्मरामि च वृकोदरम् ॥

अतिसौहित्याक्रान्ता मिष्ठान्नप्रिया विप्राः श्लोकावेतौ पठन्तः करोदरसंयोगमहिम्ना पाचयन्त्यतिमात्रं भक्षितं भोजनम् । कथं नामागस्त्येनातापिर्वातापिश्च भक्षितौ, कथं च शोषितः समुद्र इति भारतादिषु पुराणेषु च प्रसिद्धतरम् । कुम्भकर्णादीनां च कथाभिः परिचिता एव सन्ति विद्वांसः । धूमपाः, मरीचिपाः, वातपाः, जलपाश्च ऋषयो मुनयश्च श्रूयन्ते । कृच्छ्रचान्द्रायणादीनि व्रतानि पुराणेषु धर्मशास्त्रेषु च कृच्छ्रतपःप्रकरणेषु प्रायश्चित्तप्रकरणेषु च विहितानि । मासोपवासिनः पक्षोपवासिनश्च जैनधर्मानुयायिष्वद्यापि दृश्यन्ते । दृष्ट एवाधुनिकैर्महात्मनां गान्धिनामुपवासमहिमा ।

किञ्च, महाभारते वनपर्वणि श्रूयते यद् युधिष्ठिरः सूर्यमाराधयामास, ततश्चाक्षयमन्नपात्रमासादयामास । प्रत्यहं सर्वानतिथीन् भोजयित्वा द्रौपदी भुङ्क्ते । द्रौपदीभोजनपर्यन्तमेवास्यैतद्वैशिष्ट्यं तिष्ठति स्म । क्रोधावतारः क्रोधभट्टारको दुर्वासा एतदजानात् । दुर्योधनप्रेरितः स एकदा सशिष्यवर्गो द्रौपदीभोजनकालं व्यतिपात्य तत्राजगाम, भोजनं च याचयामास । विपद्ग्रस्ता द्रौपदी श्रीकृष्णं सस्मार । आगतेन श्रीकृष्णेनाक्षयपात्रे कस्मिंश्चित् कोणे कृतपद एकस्तण्डुलो दृष्टो भक्षितश्च । तेनैव तृप्तः सशिष्यवर्गो दुर्वासेति ।

अपि च, चरुभक्षणेन पुत्रोत्पत्त्यादिकं पुराणेषु श्रूयते । अमृतपानेनामराणां गरुडप्रभृतीनां च मृत्युञ्जयित्वं प्रसिद्धम् । महर्षिणा यमदग्निना वसिष्ठेन च स्वकीयाया गोः सकाशादतिथिदेवतृप्त्यै भोजनादिकमुपलभ्यते स्म । वाल्मीकिरामायणे महर्षिणा भरद्वाजेनाग्रजानुनयाय आगतस्य सपरिकरस्य भरतस्य भोजनादिव्यवस्था स्वतपःप्रभा-

वेण कृता। किं बहुना, अमृतफलभक्षणेन शतकत्रयकारस्य भर्तृहरेरमरतावाप्तिः कस्य नाम न विदिता, न श्रुतं च तस्यैतद्वैराग्यप्रवणं वचः—

यां चिन्तयामि सततं मयि सा विरक्ता
साऽप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।
अस्मत्कृते च परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च॥ इति।

अधुना किम्प्रयोजिका इमाः सिद्धय इति विचार्यम्। "दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्तुमुत्सहेत, समुद्रमगस्त्यवद्वा पिबेत्" (४।१०) इति योगसूत्रव्यासभाष्यादगस्त्येन समुद्रपानस्य, "एवमुक्त्वा पपौ राजा सर्वं भागीरथीजलम्। तपसा महता राजन् तथा योगबलेन च॥" (१।२०।८) इति विष्णुधर्मोत्तरवचनाज्जह्नुना च महीयसा तपसा योगबलेन च गङ्गापानस्य सिद्धिः समासादिता। तपसा योगबलेन च चेतसि किमप्यनिर्वचनीयं दार्ढ्यमाधीयते। तेन च नानाविधाः सिद्धयोऽनायासमधिगता भवन्ति। क्षुरधाराप्राय एष पन्थाः कैश्चिन्महात्मभिरेव क्षुण्णः, न तत्र पामरो जनः पदात्पदमपि चलितुं प्रभवति।

प्रचलितेऽस्मिन् पुराणसम्मेलने नानाविधाः सिद्धीरवलम्ब्य विचारः प्रवर्तते। पुराणेषूपवर्णितानामेतासां सिद्धीनां किमपि वैज्ञानिकं प्रायोगिकं वा स्वरूपं वर्तते न वा, तासां सर्वजनीन उपयोगः कथं नाम स्यादित्येषोऽभिप्रायो मन्ये संमेलनायोजकानां स्यात्। तपसा, योगबलेन, युधिष्ठिरादिवद्देवताराधनेन चैव सिद्धय उपलभ्येरन्, अथवाऽस्त्यपरः कश्चन भौतिकोऽपि व्यापारस्तासामुपलम्भने? किमेष प्रश्नः पुराणेषु समाहितः? अनया दृष्ट्या विचारे क्रियमाणे भगवता पतञ्जलिनोक्तासु जन्मौषधिमन्त्रतपःसमाधिजासु सिद्धिषु मन्त्रौषधिजाः सिद्धय एवात्र विमर्शपदवीमानेतुं शक्यन्ते।

मन्त्रमयीनां तासां तासां देवतानामाराधनेन सिद्धीनामुपलब्धिः श्रूयते तेषु तेषु तन्त्रेषु पुराणेषु च। मन्त्रबलेन, देवताभिव्यक्तिस्थानानां यन्त्राणां च साहाय्येन वृश्चिकादिविषाणां नानाविधरोगाणां च शमनं क्रियते तदभिज्ञैः साम्प्रतमपि। तन्त्रेषु चिकित्साशास्त्रग्रन्थेषु च मन्त्राराधनेन सहान्येऽपि केचन भौतिका उपाया उपदर्शिताः।

इन्द्रदत्तेन क्षीरेण देव्याः सीताया राक्षसगृहावासपर्यन्तं क्षुन्निवृत्तिः श्रूयते रामायणे। एवमेव—अपामार्गतण्डुलैः साधितेन क्षीरेण बहुकालव्यापिनी क्षुधानिवृत्तिर्भवतीत्यायुर्वेदग्रन्थेषु प्रतिपाद्यते। क्षुदवरोधिकाः पिपासानिवर्तिकाश्चौषध्यो बह्वयोऽगदतन्त्रेषु दृश्यन्ते। तद्यथा—

अपामार्गस्य बीजानि दुग्धाज्याभ्यां तु पाचयेत्।
पायसं वटिकां क्षीरैर्भुक्त्वा मासद्वयं वसेत्॥
अन्त्राणि कृकलासस्य मज्जाकरञ्जबीजकम्।
पिष्ट्वा तु वटिकां कृत्वा त्रिलोहेन तु वेष्टितम्॥
तावद्यो धारयेद्धीमे क्षुत्पिपासा न बाधते।
पद्मबीजं महाशालीं छागीदुग्धेन प्रोक्षयेत्॥
साज्यं तत्पायसं कृत्वा भोजनं द्वादशवासरम्।
कोकिलाक्षस्य बीजानि विजयाबीजसंयुतम्॥
धात्रीबीजेन संयुक्ता वटिका क्रियतां नरैः।
तस्य भक्षणमात्रेण तस्योपरि गवां पयः॥
क्षुत्पिपासाहरं नित्यं नान्यथा मम भाषितम्।
औषधी कुतनी नाम द्विहस्ता चलकांशुका॥
एरण्डसदृशैः पत्रैः पुष्पैश्चापि सुलक्षयेत्।
तस्याः कन्दं समादाय ताम्बूलेनैव मात्रतः।
भक्षणं प्रातरुत्थाय क्षुत्पिपासाहरं परम्॥ इति।

भस्त्रकप्राणायामस्याभ्यासेन भक्षितमन्नदुग्धादिकं पञ्चस्वेव क्षणेषु जीर्यते। केषाञ्चन आसनानामभ्यासेन भोजनमात्रा शनैः शनैरल्पा भवति।

योगतन्त्रविभागस्य आयुर्वेदविभागस्य च स्थापना समजनि संस्कृतविश्वविद्यालये वाराणसेये। अत्राधुना योगशास्त्रेषु, तन्त्रेषु, आयुर्वेदग्रन्थेषु च प्रतिपादितानामेतादृशानां केषाञ्चन विषयाणां प्रायोगिकमध्ययनं नितान्तमपेक्षितम्। सिद्धीनां शाब्दिकं वर्णनं वैरस्याय शास्त्रेष्वनास्थावतां तत्र वैराग्यबुद्धेरुत्पादनाय चैव प्रभवेदिति विरम्यते साम्प्रतम्॥

# महाभारतादौ सिद्धीनां प्रसङ्गाः

पाण्डेयो रामनारायणदत्तशास्त्री, साहित्याचार्यः, वा० सं० वि० वि०, वाराणसी।

विघ्नविनाशनदक्षं लक्ष्यं भक्तेः सुमङ्गलाधारम्।
गिरिवरविपिनविहारं श्रीगोपीगणपतिं वन्दे॥

वाराणसेयसंस्कृतविश्वविद्यालयीयपुराणगोष्ठीप्रवर्तकैर्विपश्चिदपश्चिमैर्महाभारतप्रभृतिषु सिद्धीनां प्रसङ्गमवलम्ब्य किञ्चिदावेदयितुं प्रवर्तितोऽहं तत्प्रस्तावानुरूपं किमपि निरूपयितुं यथाप्रज्ञं प्रबन्धेऽस्मिन् प्रयतिष्ये। नेदमविदितं विदितवेदितव्यानां विदां यन्महाभारतं रामायणं पुराणानि चोपपुराणादिसंवलितानि तानि तानि क्रियाज्ञानेच्छात्मिकानां सिद्धीनामसङ्ख्यैः प्रसङ्गैः सुतरां संभृतानीति, तेषां समेषामपारपारावारान्तर्गतानां रत्नराशीनामिव साकल्येनाकलनं संकलनं वा न शक्यसम्भवमतस्तत्सारमात्रस्यैव दिङ्मात्रमिह दर्श्यते।

तत्रादौ सिद्धिपदार्थो विचारतुलायामवतार्यते। 'साधधातोर्भावे क्तिनि' निष्पन्नः सिद्धिशब्दो निर्वृत्तिवचनः। 'सिद्धो मनोरथः' इत्यादिव्यवहारदर्शनात् सिद्धिशब्दस्य प्राप्तिरर्थः।

मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥
(गीता ७।३)

इत्यादौ ज्ञानाभिप्रायकः सिद्धिशब्दः।

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा॥
(गीता ४।१२)

इत्यादौ कर्मानुष्ठानसम्पत्तिः सिद्धिपदार्थः। "अथ सिद्धिशब्दस्य कः पदार्थः? नित्यपर्यायवाची सिद्धिशब्दः।" इति "नित्ये शब्दार्थसंबन्धे" इति वार्त्तिकस्य व्याख्यानावसरे महाभाष्यकारेण सिद्धशब्दस्य नित्यार्थत्वे निर्णीते नित्यत्वमपि सिद्धिशब्दस्याभिधेयमभिध्येयम्। एवञ्चालौकिककर्मणामनुष्ठानं लोकोत्तरचरित्रस्याविष्करणं निजाभीप्साविषयीभूतस्यार्थस्यावश्यं प्राप्तिरलौकिकविज्ञानं नित्यस्यैव ज्ञानस्य वा

निर्मलेऽन्तःकरणे निरावरणः प्रकाशश्चेत्यादि सर्वमेव सिद्धिशब्दव्यपदेशभाग् भवितु-मर्हति। अतः क्रियाज्ञानेच्छात्मताभेदात् सिद्धीनामिह त्रिधा विभागो युज्यत एव।

अथासां सिद्धीनां साधने कानि साधकानि, कानि च बाधकानि कारणानि? इति चर्चापि नितरामौचितीमञ्चतीति प्रस्तूयते। तत्र साधका हेतवः 'सहकारिणः' इति, बाधकाश्च 'प्रतिबन्धकाः' 'अन्तरायाः' इति वा व्याह्रियन्ते। अथ मन्त्रसिद्धौ सहकारिकारणानि, यथा परशुरामकल्पसूत्रे—"सम्प्रदायविश्वासाभ्यां सर्वसिद्धिः।" तत्र सम्प्रदायो गुरुपरम्पराचारानुसरणम्; विश्वासो मन्त्रेषु फलसाधनत्वविषयको निश्चयः। यद्यपि सर्वकारणेषु लोके नियतैककार्यजनकत्वं दृष्टम्, तथापि मन्त्रेषु न तथा। एक एव मन्त्रो यद् यदीप्सितं तत्तत् सर्वं जनयतीति ज्ञापयितुं सूत्रे सर्वपद-मुपादीयते। ननु लोकविरुद्धार्थकेऽस्मिन् वाक्ये कथं प्रामाण्यम्? इति चेत् 'विश्वास-भूयिष्ठं प्रामाण्यम्' इति गृहाण; इह प्रामाण्यं नाम संवादिप्रवृत्तिजनकतद्वति तत्प्रकारकज्ञानजनकत्वम्। तच्च सर्वसिद्धिरिति पूर्वोदिते वाक्ये विश्वासभूयिष्ठ-रूपम्। विश्वासपदार्थश्चात्र वाक्यप्रयोक्तर्याप्तत्वनिश्चयः। पुरुषे विश्वासभूयिष्ठं च स्वोत्तरोत्पन्नत्व-स्वविषयविषयकत्वेत्येतदुभयसंबन्धेन विश्वासविशिष्टशङ्कानधिकरण-त्वम्। भूयिष्ठपदस्य भूयिष्ठाश्रयज्ञानविषये लक्षणा। अत्यन्तविश्वासवत्पुरुषैकवेद्यं तच्छास्त्रप्रामाण्यमित्यर्थः। कुतर्कशालिनां तु शास्त्रप्रामाण्यं सर्वथागम्यम्। तदुक्तं भट्टपादैः—"शास्त्रैकगम्या ये ह्यर्था न तांस्तर्केण योजयेत्" इति।

अन्तराया योगदर्शने यथा—"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्ति-दर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" (१।२९); "दुःख-दौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः" (१।३०)।

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासादि समुपदिष्टम्। परशुरामकल्पसूत्रे बाधकानां वर्जनमुच्यते। तद्यथा—"कामक्रोधलोभमोहमदमात्सर्याविहितहिंसास्तेयलोक-विद्विष्टवर्जनम्" (१९)।

मन्त्राणामचिन्त्यशक्तिता चाभ्युपगन्तव्या। शक्तावचिन्त्यत्वं तर्काविषयत्वम्। मन्त्रेषु ज्ञानावरकाविद्यानिवर्तकत्वशक्तिरस्तीति न जातुचिद् विस्मर्तव्यम्।

त्रिधाविभक्तानाममूषां सिद्धीनां का योनयः? इति जिज्ञासायां जागर्ति गतायाम्—"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः" इति व्याहरन्ते योगविदां वराः।

## जन्मजाः सिद्धयः

तत्र जन्मजाः सिद्धयो देवेषु पूर्वदेवेषु तत्सन्ततिषु च सन्ततमक्षिलक्ष्यीक्रियन्ते पुराविद्धिर्विद्धिः। यथा सुरेशात्मजे जयन्तेऽपि ता एवाकाशगमनादिसिद्धयः समभूवन्, या वैजयन्ताधिपतौ सुरेन्द्रे संनिहिता आसन्। हैडम्बेये घटोत्कचेऽपि हिडिम्बागताः शक्तयो जन्मना सहैव समजायन्त। अत्र रामायणं महाभारतमुभे अपि साक्ष्यं समुपस्थापयतः। पवनपुत्रेऽपि प्रादुर्भावमुपेता जन्मजाः सिद्धयो नितरां प्रसिद्धाः। यतोऽसौ बाल एव बालरविबिम्बमपि बिम्बफलभ्रान्त्या कवलयितुं निरवलम्बमम्बरमुत्पुप्लुवे। यथा ह्याह कुम्भजन्मा मुनिः ( वाल्मीकीये रामायणे उत्तरकाण्डे ३५।२३ ) —

तदोद्यन्तं विवस्वन्तं जपापुष्पोत्करोपमम्।
ददर्श फललोभाच्च ह्युत्पपात रविं प्रति॥

नैतावदेव, विदेहराजनन्दिनीपदवीं दवीयसीमनुसन्दधानोऽयम् "उल्लोलयन् वालधिवल्लिमुच्चैः कल्लोलिनीवल्लभमुल्ललङ्घे।" आत्मानमभ्यवहर्तुमिच्छन्ती सुरसापि तेन रसादेव स्वकीयसृतेरपसारिता। प्राणैः सह परेषां छायाग्राहिणी सिंहिकापि कापि कृतान्तच्छायानुसरिणी कृता[1]। लङ्काऽप्यलं कामपि दुरवस्थामासादिता, समुन्मूलितमूलाशोकवनिका लुञ्चितकुन्तलकलापा रिपुकान्तेव कान्तारगता व्यधायि। किं बहुनाऽसहायेनाप्यमुना दमुनास्तर्पितः समर्पितलङ्कालक्षणहविष्यान्नेन जीवत्यपि जितालकाधिपतौ लङ्काधिपतौ। राजराजस्य सौगन्धिककाननेऽध्वानमवरुध्य राजमानेनासमानेनानेन मारुतिना स्वीये वालधौ गिरितोऽपि गुरुतरगौरवगुणस्तादृशः कोऽपि गरिमा समारोपितो येन पवनकुमारोऽप्यसीमवलसमन्वितोऽपि भीमसेनो न मनागपि तं विचालयितुं पारयामास परमायासमनुभवन्। एवमेव भीमसेनोऽपि कदाचिन्मातुरङ्कात् परिभ्रष्टो यच्छिलोच्चयशिलोच्चयमपि चूर्णयाञ्चकार; सोऽपि कोऽपि तस्य जन्मजाया एव सिद्धेराश्चर्यकरश्चमत्कारः।

---

१ अहो तादृशं विज्ञानं येन प्रतिबिम्बं ग्रहीतुमशक्यमपि गृहीतम्, ततोऽपि दुःशकं प्रतिबिम्बग्रहणेन बिम्बग्रहणं शक्यसम्भवं समपद्यत। चमत्कारोत्पादकमिदं विज्ञानमाधुनिकानां वैज्ञानिकानां कृते नूनमनुसन्धानस्य विषयः।

जायमान एव व्यासो यज्झटिति वर्धिताङ्गो भूत्वा मातुराज्ञामधिगम्य तपसि प्रववृते, शैशव एव च स्वतोऽधिगतसर्वशास्त्रः सन् वेदान् व्यस्य व्यास इति संज्ञां लेभे; इयं तस्य जन्मजैव सिद्धिः ( आदि० अ० ६३ )।

## ओषधिजा सिद्धिः

ओषधिजा सिद्धिर्यथा—अजस्रं सत्यपराभ्यां नासत्यदस्राभ्यां सह विविधौषधिरससंस्कारसंस्कृते ह्रदेऽवगाहनाद् यज्जराजीर्णतनुरपि च्यवनो नवनवायमानं तारुण्यमुपेत्य तरणिरिव त्वरितं विदिद्युते, सा तदीया स्ववैद्यप्रसादोपलब्धा यौवनदायिनी सिद्धिरोषधिजैव ( महा० वन० १२३ )। सदाचारादच्यवने तस्मिंश्च्यवने महामुनौ तपःसमाधिजा अणिमानणिमादयः प्रसिद्धसिद्धयोऽपि समवर्तन्ततरामेव नितरामिति त्वन्या वार्ता। संजीवनी द्विधा—विद्यारूपौषधिरूपा चेति। विद्यारूपायाः सिद्धेश्चर्चा तु मन्त्रजासु कर्तव्या। ओषधिरूपा रामायणे निरूप्यते। हनुमता हिमवतः शिखरात् समानीतया सुषेणेन सुप्रयुक्तया च यया शक्त्याघातविमूर्च्छितः सौमित्रिः पुनरुज्जीवनमवाप सा तु संजीवनौषधिश्चिकित्सकचूडामणिभिरिदानीं चिन्तामणिरिवान्वेष्टव्या नूनमव्याकुलेन चेतसा। अग्निपुराणोक्तो मृतसञ्जीवनकरः सिद्धयोगोऽनल्पगुणगौरवशाली मृत्युञ्जयकल्पो वा संजीवनौषधिरेव, आहोस्वित्तत्प्रतीकाशं प्रकाशमानं किमप्यन्यदेव भव्यं भैषज्यम् ? इति भूरिभागैर्भिषजां वरेण्यैरेव चारु विचारणीयम्। अग्निपुराण एकोनसप्तत्युत्तरद्विशततमाध्यायतः समारभ्य षडशीत्युत्तरद्विशततमाध्यायपर्यन्तं सप्तदशस्वध्यायेषु लक्षणीया विलक्षणा नानाविधौषधिसम्भवाश्चमत्कारा बहुप्रकाराः। एका तथाविधाकाराऽप्योषधिर्घृताद्भुतशक्तिसारानुश्रूयते यामाक्रम्य स्थितेन दिवापि तारा आरादालोक्यन्ते।

महाभारते व्याहृतम्—दुर्योधनदापितगरलगर्हितभोजनाभ्यवहरणजनितां मरणकल्पामनल्पां मूर्च्छामृच्छँल्लताजालयन्त्रितशरीरो वीरो वृकोदरो गङ्गाम्भसि निमज्जितो यदा काकोदरलोकं पातालमवाप, तदाऽऽर्यकवासुकिप्रेरणया तुण्डेनाष्टकुण्डीरसपानादयुतगजराजतुल्यबलतामुपेत्य यथाकालमुपसंगते संग्रामावसरे विपक्षतः समक्षतः प्राप्तान् गिरीन्द्रसदृशाकृतीन् गजेन्द्रानपि लीलयोन्मूलयितुमलंबभूव। रणाजिरे परैरवार्यमार्यं द्रोणाचार्यमपि सरथं कन्दुकलीलयोत्तोल्य नैकधोर्ध्वमुत्क्षेप्तुं क्षमता-

मात्मनः प्रत्यक्षमाविश्चकार। (आदि० १२७, १२८; भीष्म० ८९, १०२; द्रोण० १२८)। एतादृशस्यासदृशस्याद्भुतपराक्रमस्य सिद्धिरोषधिजैवेति निश्चप्रचं प्रवक्तुं शक्यते।

## मन्त्रजा सिद्धिः

मन्त्रजा सिद्धिरपि महाभारतादिषु बहुधा वर्ण्यते। कुन्तिभोजकुमार्या विहितया वर्यया सपर्यया परिचर्यया च परितः परितोषमुपेतेन वामदेवांशतया कामतः कायेन सुवाससापि नामतो दुर्वाससा मुनिवरेण सा पृथा वरेण वरेण पुरस्कृता। स च वरः सुभागधेयाभिरभिध्येया देवहूतिनामधेया विबुधवशीकरणविद्यैव मन्त्ररूपा। ययाऽऽहूतः पुरुहूतोऽनूरुसूतो वा यः कोऽपि पूज्यतमो देवः स्वोपासिकायाः सकाशमकस्मादागम्य पुत्रमेकं निजानुरूपं तस्य प्रदाय ततो निवर्तते (महा० ६७,११० अध्यायौ)। वर्तत इयं विद्या योषाजनेनैव जोषं जोषणीया। कर्णत्रयोऽन्ये कौन्तेया माद्रेयौ चास्या विद्याया एव सत्फलान्यासन्। वनिताजनवेद्या विद्येयं कुन्त्या सहैव कुत्रापि विलयं गता। तदर्थमधुनात्यर्थचिरञ्जीवी मुनिवरो दुर्वासैव वसुमतीतलेऽनुसन्धेयः सन्धेयश्च।

पुरा प्रशस्यभागधेयः काश्यपनामधेयः कश्चिन्मन्त्रवेत्ता विपश्चिद् ब्राह्मण आसीत्, येन वासुकेरवरजेन कुण्डलिमण्डलसंरक्षकेण तक्षकेण दष्टं तदीयविषाग्निना विनष्टं विशालं तरुं तदारूढं तरुणमप्येकं त्वरितं मन्त्रबलेन पुनः पूर्ववदेवोज्जीवयामास (महा० आदि०, अ० ४२)। स मन्त्रः किमानुपूर्वीक आसीदिति कुत्रापि नोपन्यस्तम्, अस्तं गत एव स तेन मन्त्रविपश्चिता सहेत्यनुमीयते। सर्वविद्याप्रकाशकेन व्यासदेवेनापि तत्र मौनं समालम्बितम्। अविलम्बितमेव तादृशस्य मन्त्रस्यान्वेषणं सर्वस्य परमं मङ्गलकरं भवे भवेत्। न केवलमाशीविषाणां विषाणामेव साक्षात्तेषां विषधराणामपि निवारणाय मन्त्रो महाभारते सुस्पष्टमुट्टङ्कितो लक्ष्यते (महा० आदि० ५८)। अयं मन्त्रो विहितोपकाराय यायावरीयाय जरज्जरत्कारुजन्मने मुनिवरायास्तीकाय महाभागैर्नागैरेव वररूपेण प्रदत्तः। तस्य मन्त्रस्योच्चारणमास्तीकनामव्याहरणं चाकर्ण्य यश्चक्षुःकर्णः सर्पस्ततो नापसर्पति तस्य मूर्धा शतधा बेभिद्यत इति फलश्रुतिर्भूयो भूयः श्रुतिविषयतामेति।

चेतसा सुस्थिरेण युधिष्ठिरेण द्यूतापहारितसर्वस्वेन वनवासारम्भेऽदम्भेन भावेनाष्टोत्तरशतनामभिर्जगत्प्रसवितुः सवितुर्देवस्य तथा समाराधनं व्यधायि, येन

प्रसादमुपलम्भितो भगवान् भानुमान् ससम्मानमक्षयान्नपात्रं विप्रर्षिकुलपालकाय तस्मै पार्थप्रवराय प्रत्तवान्। तानि चावन्ध्यफलानि सकलानि नामानि सम्प्रति महाभारते तथैव समुपलभ्यन्ते (द्रष्ट० महा० वन०, अ० ३)। साम्प्रतं सत्त्वोत्कर्षशालिभिः सुजनावलिभिर्मिलित्वा पृथक् पृथगेव वा तैर्नामभिर्यदि त्रयीतनुस्तरणिराराध्येत तदास्मिन् दुर्भिक्षभयाक्रान्ते देशे काले चाक्षयान्नसमृद्धेस्तदनुकम्पया सम्पादनाद् महानुपकारः संभवेद् विश्वेषां जनानाम्।

महाभारते वनपर्वणि षट्त्रिंशत्तमेऽध्याये प्रतिस्मृतिविद्याप्रसङ्गः सङ्गतः समवलोक्यते। सा च विद्या विद्यानिधिना व्यासेन विधिना युधिष्ठिराय, तेन च स्वीयसोदरेभ्यः सामोदरङ्गं प्रदत्ता। विराटपर्वणि षष्ठेऽध्याये युधिष्ठिरकृतं भीष्मपर्वणि त्रयोविंशतितमेऽध्याये च गाण्डीविना विहितं हिततमं दुर्गास्तवनं मिथो भिन्नमभिवीक्ष्यते। येनैकत्र युधिष्ठिरोऽन्यत्र रणाङ्गणे च सव्यसाची देव्याः साक्षात्कारं कृत्वा तत्कृपादृष्ट्याभीष्टं वरमवाप्तुमीष्टे स्म। इदानीमपि सैनिकैः सेनापतिभिश्च तत्तदीयं स्तोत्रं प्रत्यहमावर्तनीयं श्रद्धया विश्वासेन च, यतश्चण्डिकानुग्रहेण प्रचण्डवैरिमण्डलानामुपरि निश्चयेनास्माकीनो विजयः संभाव्येत।

आदिपर्वणि षट्त्रिंशत्तमेऽध्याये मृतसञ्जीवन्या विद्यायाः प्रसङ्गः संगम्यते। तां चार्हणीयां विद्यां बार्हस्पत्यः कचोऽधिगन्तुकामो सुरद्विषां द्वेषाग्नौ दग्धो भस्मसाद्भूय सुरायां निक्षिप्तो गुरोः शुक्राचार्यस्योदरदरीमभिनिवेशितो यदा तदा देवयान्या आग्रहग्रहगृहीतेन तेनाज्ञाततद्वृत्तेनोशनसा सञ्जीवनीं प्रयुज्य समाहूतः कचः 'तवोदरेऽस्मि भगवन्।' इति ब्रुवाणः स प्रियशिष्यो गुरुणा सुतनिर्विशेषं विशेषेणानुगृहीतो मृतसञ्जीवनीं विद्याञ्चाध्यापितः। तदनु स शुक्रस्योदरं विदार्य निष्क्रान्तो विद्याबलेन तमप्यजीवयत्। तदारभ्य दिवौकसां मण्डले सा विद्या विद्योतमानाभवत्। मानवेऽस्मिँल्लोके तु नाद्यावधि सा केनापि विनीतेन समानीतेत्यहो दुर्भागधेयमस्माकम्। रामायणं चापि विविधकामानामभिमतसिद्धीनां चाभिराममयनं बोभवीति विधिनानुष्ठानविषयतामानीतं चेत्स्यादिति नाविदितं विदुषाम्। मार्कण्डेयपुराणगताया दुर्गासप्तशत्याः पाठेन महाभारतोदधिमन्थनसमुद्भूताया दिव्यरत्नरूपाया गीताया अपि प्रात्यहिकस्वाध्यायेन भगवत्या भगवतश्च प्रसादमुपलभ्य देशोऽयमशेषाभ्युदयनिःश्रेयसभाग् भवितुं शक्नोति। यथेदमुच्यते—

सर्वाबाधाविनिर्मुक्तो धनधान्यसमन्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥
( दु० स० १२।१३ )

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥
( गीता १८।७० )

अनुष्ठानविधिरनयोः सद्ग्रन्थयोर्विधिज्ञान् विज्ञान् प्रणिपातादिना नयेन प्रसाद्य सम्यगापृच्छ्य वेदनीयः । भाग्यवतां धनमिव भागवतं महापुराणमपि तत्पारायणश्रवणजन्येन पुण्येन सर्वाभीष्टप्रदं भवतीत्यपि च विज्ञातमेव विज्ञाग्रगण्यानाम् । अन्येषां पुराणानां महाभारतस्यापि श्रवणेनाध्ययनेन च विविधानामभीष्टानां सिद्धिर्भवतीति तत्र तत्र फलमनुश्रूयते । भागवत एका तादृशी विद्या वर्णिता, यस्याः सप्ताहमात्रमावर्तनेन भगवतः संकर्षणस्य दर्शनेन सह लोकान्तरगमनं च साधितं चित्रकेतुना नरपतिकुलकेतुना । तत्रैव द्वादशाक्षरमन्त्रजपेन ध्रुव औत्तानपादिर्ध्रुवलोकाधिपत्यं प्रपेद इति प्रतिपादितम् । सर्वातिशायिन्या अस्याः सिद्धेरङ्कशायिन्य एवान्या अणिमाद्या अणीयस्यः सिद्धयः । त्रैलोक्यविजयविद्या संग्रामविजयविद्या चाग्निपुराणे वर्ण्येते ( १३४, १३५ अध्यायद्वये ); विद्ये इमे परमोपयोगितां दधाने अपि साधकानामभावादुपेक्षिते इव लक्षिते भवतः । ऋक्सामयजुषामथर्वणश्च मन्त्रानवलम्ब्य नानाविधाः सिद्धिदाः प्रयोगास्तत्रैव ( २५९-२६३ अध्यायपञ्चके ) प्रपञ्चिता द्रष्टव्याः । स्कान्दे पाद्मे चैवंविधा मन्त्रानुष्ठानप्रयोगास्तत्तत्साधकैरुपयुक्ताः समुपदिष्टा अभीष्टसिद्धिदाः । अन्येष्वपि बहुषु पुराणेष्वेषैव स्थितिः । नानादेवदेवीनां मन्त्राश्च स्तम्भनवशीकरणादिसाधका अग्निपुराणे सानुष्ठानविधानं वर्णिताः । नारदमहापुराणेऽप्येकषष्टितमादध्यायादूर्ध्वं पञ्चसप्ततितमाध्यायपर्यन्तं शैववैष्णवशाक्ततन्त्रानुसारेण तत्तत्सिद्धिप्रदाश्चतुर्वर्गफलदाश्च मन्त्रानुष्ठानप्रयोगाः परमोपयोगितां पिपुरतः पुरतः परिदृश्यन्ते । श्रीमद्भागवते नारायणवर्म, स्कान्दे शिवकवचं च महामाहात्म्ययुते समाराधकरक्षणसक्षणे विजयप्रदे साङ्गकरन्यासं पाठमात्रेण सर्वसिद्धिप्रदत्वेन प्रसिद्धिं गते विलोक्येते । तत्र नारायणवर्मविषये व्याहरति विश्वरूपः—

मघवन्निदमाख्यातं वर्म नारायणात्मकम् ।
विजेष्यस्यञ्जसा येन दंशितोऽसुरयूथपान् ॥

एतद् धारयमाणस्तु यं यं पश्यति चक्षुषा ।
पदा वा संस्पृशेत्सद्यः साध्वसात् स विमुच्यते ॥
( श्रीमद्भाग० ६।८।३५-३६ )

एतादृशवर्माच्छादितमर्माणो योद्धारो योद्धारश्चेदवश्यं विजयं लब्धार इति नात्र संशयलेशोऽपि मन्त्राणामचिन्त्यशक्तितायां विश्वासं दृढं रक्षमाणानाम् । देवीभागवते नवमे स्कन्धे ब्रह्मवैवर्तपुराणे च ब्रह्मखण्डे श्रीकृष्णजन्मखण्डे च नैकविधा मन्त्राः स्तोत्राणि कवचानि चालोक्यन्ते, स्वाध्यायादेव केवलं सर्वसिद्धिप्रदानीति विदितचरमेव पुराणमर्मविदां विद्वत्तल्लजानाम् । महत्त्वाद् भारवत्त्वाच्च सर्वमहत्तरे महाभारते भीष्मस्तवराजो विष्णुसहस्रनामशिवसहस्रनामप्रभृतीनि चान्यानि तुलनामतीतानि स्तवनानि सन्ति, येषामावर्तनमात्रेण सर्वसिद्धिनिर्वर्तनं सम्पत्स्यते । यथाह भीष्मः—

एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥
( महा० अनु० १४९।८ )

तादृशैः स्तवनैः समर्चितः सर्वसिद्धीश्वरो भगवान् किं किं न साधयितुं शक्नोति ? नास्ति किमप्यसाध्यमप्राप्यं वा प्रसन्ने सति भगवति । धर्मार्थकाममोक्षविषयकसिद्धिप्रदाने तु यथा हरिः समर्थस्तथैव हरोऽपि; तयोरुभयोरैक्यात् । वस्तुतस्तु विधिहरिहराणां त्रयाणामेवैक्यम्, यथाऽऽह महाकविरभिनन्दः—

यो हरिः स हरो देवो यो हरः स पितामहः ।
नामत्रयविभिन्नेयमेकैव त्रिदशत्रयी ॥

## तपःप्रभावजा सिद्धिः

तपःसमुद्भूताः प्रभूताः सिद्धयस्तु रामायणमहाभारतादिषु पदे पदे प्रतिपाद्यन्ते । दिङ्मात्रं यथा—बालकाण्ड एकपञ्चाशत्तमात् सर्गादारभ्य पञ्चषष्टितमसर्गपर्यन्तं वसिष्ठविश्वामित्रयोस्तपःप्रभावः सप्रपञ्चं प्रतिपादितः । किष्किन्धाकाण्डे द्विपञ्चाशत्तमे सर्गे तपःप्रभाप्रभासमानाया असमानायाः स्वयंप्रभाया अद्भुता तपःसिद्धिः समवेक्षणीया । उत्तरकाण्डे वर्णितानि रावणप्रभृतीनां लोकोत्तरसिद्धिप्रदानि तानि तानि तपांसि केषां न मनांसि विस्मयवार्धौ विनिमज्जयन्ति । श्रीरामचन्द्रचरणारविन्दचिन्तनरतस्य भरतस्य चतुर्दशवर्षाणि समाचरितं तपोऽपि भुवनत्रये न तुलनां धत्ते ।

महाभारते आदिपर्वणि ( ३३, ३६ ) अध्यायद्वये भगवतः शेषनागस्य दुश्चरं तपस्तत्प्रभवा सिद्धिश्च वर्णिते। यतोऽनन्तशक्तिर्भगवाननन्तो धरणीधरतां श्रीपतेः शय्यारूपतां चासमां समाश्रितः। बहूनां ब्रह्मर्षिमहर्षिराजर्षीणां च तपसाऽऽयत्तीकृत-सकलसिद्धीनां समृध्यमानतपःसमृद्धीनां चरितानि तानि तानि महाभारते वर्णना-विषयतां गतानि। वर्णतः श्यामेनाप्यभिरामेण यशसा नाम्ना चार्जुनेन तपसैवाप्रति-रूपेण पशुपतिमाराध्य पाशुपतास्त्रमद्वितीयं समासादितम्, येन तस्य क्षणार्धेनैव त्रिभुवन-संहरणशक्तिमत्ता समपद्यत ( द्रष्टव्यं महाभारते वनपर्व )। इन्द्रवाय्वग्निवरुणादि-देवताकानि तानि तानि दिव्यास्त्राणि तत्तद्देवानां तद्विदां गुरूणां च समाराधन-लक्षणेन तपसैव संलभ्यान्यलभ्यान्यपि। विश्वामित्रस्तपसैवोग्रतरेण ब्रह्मर्षितामापेदे ( आदि० ७१।२० )। वसिष्ठस्तपसैव दिनमणिं प्रसाद्य संवरणाय तपत्याः संवरणं कर्तुं पारयामास ( आदिपर्व १७२ ), इलायाश्च पुंस्त्वं साधयाञ्चकार ( आदि० ७५, अनु० १४७ )। धरण्यामुञ्छवृत्तिधरस्य दुर्धरतपोधरस्य ब्राह्मणस्याद्भुता सिद्धिरुप-वर्णिता, यस्य सक्तुप्रस्थदानजन्यं पुण्यमश्वमेधसमुद्भवं पुण्यातिशयमप्यत्यशेत ( आश्व० ९० अध्याये )। वैशम्पायनगुरौ द्वैपायने व्यासे यन्निग्रहानुग्रहसामर्थ्यं सर्वज्ञत्वं महाकवित्वमन्तर्धानं विप्रकृष्टव्यवहितस्य ज्ञानं दर्शनं च सर्वभूतरुतज्ञान-माकाशगमनादिकं च विविधं सिद्धिजातं वर्ण्यते ( आदि० प्रथमेऽध्याये ), तत्सर्वं तदीयतपःप्रभवमेवेति वेदितव्यं विदितवेदितव्यैः। वसिष्ठस्य तपसैव पराभूतौ काम-क्रोधौ रिपू नित्यं तदीयचरणद्वयपरिचरणनिरतावास्ताम्। तपसा वशीकृतेन्द्रियत्वा-देवायं वसिष्ठ इति संज्ञां लेभे ( महा० आदि० १७३।१—६ )। तपसैवैतेन निजामित्र-भावमुपेतो विश्वामित्रोऽपि दिग्विजेता जितः ( आदि० १७४ )। साक्षात्पवनदेवेनास्य पावनं तपः सप्रभावमुपवर्णितम् ( अनु० १५५।१६—२५ )। अन्येष्वपि पुराणेषु तपोमाहात्म्यं तपस्विनां सिद्धिप्रकर्षश्च प्रभूततयोपवर्ण्येते। धर्माचरणाद्च्यवन-श्च्यवनस्तपोबलेनैव शर्यातिसैन्यस्य मलावरोधं विदधे, कृतापराधां तदीयां रूप-लावण्यवन्त्यां धन्यधन्यां सुकन्यां च पत्नीत्वेन प्रपेदे। असोमपावपि नासत्यदस्रौ तेन सोमं पायितौ। स्वविरुद्धमरुद्धवेगं वज्रमुद्यच्छतो देवराजस्य भुजौ स्तम्भितौ ( वनपर्वणि १२२–१२४ अध्याया द्रष्टव्याः )। धृतराष्ट्राय दिव्यां दृष्टिं प्रदाय महा-भारतयुद्धे वीरगतिं प्राप्तान् कुरुपाण्डवपक्षीयप्रमुखवीरान् पूर्वशरीरेणैव गङ्गाम्बु-

प्रवाहात् प्रकटय्य स्वस्वसंबन्धिभिः सह सङ्गमय्य यत्सर्वानेव सुखं प्रापयाञ्चकार व्यासदेवः, सापि तदीयतपःप्रभवैव काचन चमत्कारिणी सिद्धिः (आश्रमवासिके पर्वणि ३२, ३३ अध्यायद्वये)।

## समाधिजाः सिद्धयः

समाधिजाः सिद्धयस्तु वस्तुतः संयमयोनयः। 'विभूतयः' इत्यपरं नामधेयं तासाम्। यत्र हृत्पुण्डरीकादिरूपे देशे ध्येयं चिन्तनीयं तत्र देशे चित्तस्य बन्ध एकाग्रता धारणेति निर्धार्यते। तत्र देशे चतुर्भुजादिध्येयाकारवृत्तिप्रवाहो ध्यानमित्युच्यते। तदेव ध्यानं यदा ध्येयावेशवशाद् ध्यानध्यातृदृष्टिशून्यं ध्येयमात्राकारं भवति, तदा समाधिरभिधीयते। एतद् धारणादीनां त्रयमेकत्र विषये विधीयमानं संयम इति व्यपदिश्यते। तत्र तत्र संयमात् तास्ता विभूतयः प्रादुर्भवन्ति। ताश्च योगदर्शनस्य विभूतिपादे विस्तरेण वर्णितास्तत्रैव द्रष्टव्याः। इह तासां नाममात्रं निर्दिश्यते—

१. अतीतानागतज्ञानम्—यथा व्यासदेवस्य। एतेन द्रुपदस्य समक्षे द्रौपद्याः पूर्वजन्मवृत्तान्तं वर्णितम् (आदि० १९६।१-३८)। राजसूयान्ते युधिष्ठिरं प्रति भविष्यवाणी श्राविता (सभा० ४६।१—१७)।

२. सर्वभूतरुतज्ञानम् —यथा राज्ञो ब्रह्मदत्तस्य। एतेन पिपीलिकदम्पत्योर्मधुरः प्रेमालापः श्रुतो ज्ञातश्चेति हरिवंशे मत्स्यपुराणे च वर्ण्यते। पूजन्या पक्षिण्या सहास्य संवादप्रसङ्गो महाभारतेऽपि (शान्ति० १३९।२४—१११) द्रष्टव्यः। यथा वा व्यासस्य—एतस्य केनचित् कीटेन सह संवादोऽभूत् (महा० अनु० ११७)।

३. पूर्वजातिज्ञानम् —यथा देवर्षेर्नारदस्य। एतेन व्यासं प्रति स्वकीयपूर्वजन्मन इतिवृत्तं वर्णितम्, यत्रासौ दासीपुत्र आसीदिति श्रीमद्भागवते प्रथमे स्कन्धे।

४. परचित्तज्ञानम् —यथा व्यासस्य। एतेन पाण्डवान् प्रति दुर्योधनस्य दुर्भावं करिष्यमाणमन्यायं च ज्ञात्वा तन्निवारणाय धृतराष्ट्रः प्रेरितः (वनपर्वणि ७, ८ अध्यायौ) दर्शनीयौ।

५. अन्तर्धानम् — यथा देवानां पूर्वदेवानां सिद्धविद्याधरप्रभृतीनां महर्षीणां च। मेघनादोऽन्तर्हितो भूत्वा युध्यति स्मेति रामायणे बहुशो

वर्णितम्। व्यासादीनां महर्षीणामपि तिरोधानं महाभारते भूरिशो वर्णितम्।

६. अपरान्तज्ञानम् — अपरान्तस्य मरणकालस्य ज्ञानं यथा भीष्मस्य द्रष्टव्यम्, (महाभारते अनु० पर्वणि १६७ अध्याये)।

७. बलानि (अवन्ध्यवीर्यता वा)—यथाऽप्रतिहतचक्रता चक्रवर्तिनां नरेश्वराणाम्।

८. हस्तिबलादीनि — यथा वसिष्ठस्य। तेन विश्वामित्रस्य सैनिकैः सह योद्धुं बहुविधानि बलानि प्रकटीकृतानि नन्दिनीसाहाय्येन (महा० आदि० १७४)।

९. सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्—यथा भगवतः श्रीकृष्णस्य। पाञ्चाल्या मनसा संस्मृतोऽयं पाण्डवानामाश्रम आत्मानं प्रकटीचकार, दुर्वाससः शापात् तान् ररक्ष च (महा० वन० २६३।१८—२५)। दूरस्थेनाप्यमुना भगवता द्रौपद्या दुरवस्थां ज्ञात्वा वस्त्ररूपं सन्धार्य तस्या लज्जायाः संरक्षणं कृतम् (सभा० ६८।४७)।

१०. भुवनज्ञानम् — यथा व्यासस्य। एतेन भगवता पुराणेषु भुवनकोशवर्णनं व्यधायि।

११. ताराव्यूहज्ञानम् — यथा व्यासेन शुकेन च खगोलं वर्णितम् (द्रष्टव्यो भागवते पञ्चमस्कन्धः)।

१२. तद्गतिज्ञानम् — इदमपि व्यासादावेव।

१३. कायव्यूहज्ञानम् — यथा रासक्रीडायां भगवता श्रीकृष्णेन कायव्यूहो व्यधायि, (द्रष्टव्यं भागवतम्)।

१४. क्षुत्पिपासानिवृत्तिः—तपस्विषु वर्ण्यते। यथा पर्णाहारस्यापि परित्यागात् पार्वती 'अपर्णा' इत्युच्यते।

१५. स्थैर्यम् — योगिनां चित्तस्य स्थिरता। यथाऽऽह गीतायां भगवान्—"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते"। "अभ्यासवैराग्याभ्यां तन्निरोधः" इति पतञ्जलिः।

१६. सिद्धदर्शनम् — द्यावापृथिव्योरन्तरचारिणां सिद्धानां साक्षात्कारः, यथा

रामायणे लङ्कादाहानन्तरं सीतादाहशङ्कया सन्तप्तेन हनुमता सिद्धानां दर्शनं तद्वार्ताश्रवणं च कृतम्।

एताः संयमस्य क्षुद्रसिद्धयः। एतत्सर्वं पूर्वोक्तमतीतानागतादिसिद्धदर्शनपर्यन्तमन्यद् वा जिज्ञासितं योगी प्रातिभात् स्वप्रतिभोत्थादनौपदेशिकाद् ज्ञानाद् वा जानाति संयमान्तराणि विनापि। प्रातिभं ज्ञानं विवेकजस्य सर्वज्ञत्वस्य पूर्वरूपम्, यथा सूर्योदयस्य पूर्वरूपं प्रभा। तदेवं क्रमाज्जायते—चित्तसंवित्, पुरुषज्ञानम्, तदनु प्रातिभश्रावणवेदनादर्शास्वादवार्तासंज्ञाः षट्सिद्धयः सामर्थ्यविशेषरूपा भवन्ति। दृष्टकारणं विनैवाकस्माद् व्यवहितविप्रकृष्टातीतानागतसूक्ष्मार्थेषु यथार्थज्ञानसामर्थ्यं प्रतिभा, तज्जन्यं ज्ञानं प्रातिभं मनसः सिद्धिः। तथा व्यवहितादिश्रवणसामर्थ्यं श्रोत्रस्य सिद्धिः। त्वचस्तादृशं सामर्थ्यं वेदनम्, चक्षुष आदर्शः, रसनाया आस्वादः, घ्राणस्य वार्ता इति विवेकः। ते च प्रातिभाद्याः समाधावुपसर्गा व्युत्थाने च सिद्धयः। एता ज्ञानरूपाः संयमसिद्धयः।

क्रियारूपा यथा—परकायप्रवेशः, यथा विपुलेन देवेन्द्राद् गुरुपत्न्याः संरक्षणार्थं तस्याः शरीरे प्रवेशो व्यधायि (महा० अनु० ४०।५७–५८)। यथा वा सुलभया राजर्षेर्जनकस्य बुद्धौ प्रविश्य तदीयं मनो बद्धम्, तदनु तयोरेकशरीरस्थयोरेव वार्तालापोऽभूदिति वर्ण्यते (महा० शान्ति० ३२०।८—७५)।

जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च—यथा शुकस्योर्ध्वगतिर्वर्णिता। पर्वतादिष्वपि तस्यासङ्गः, ऊर्ध्वगमनं च निरन्तरायमभूत् (शान्ति० ३३२ अध्याये)।

प्रज्वलनम्—यथा भागवते सतीदेहस्य स्वशरीरजेनाग्निना प्रज्वलनं जातमिति वर्णितम्।

दिव्यं श्रोत्रम्—यथा हनुमता सिद्धानां वार्ता श्रुता रामायणे।

आकाशगमनम्—यथा नारदादीनाम्, यथा वा पाण्डुं निवार्य शतशृङ्गपर्वताद् मुनीनां ब्रह्मलोके गमनम् (आदि० ११९।१४–१५)। हनुमतश्चाकाशमार्गेण सिन्धुमुल्लङ्घ्य लङ्कां प्रति गमनम् (रामायणे)। योगशास्त्रोक्तसंयमविशेषाद् बहिरकल्पिता वृत्तिर्महाविदेहाख्या सिद्धिः। तस्यां सत्यां प्रकाशावरणस्य बुद्धिसत्त्वावरकस्य रजस्तमआदेः क्षयो भवति। तत्क्षये च निरावरणं योगिचित्तं स्वेच्छया विहरति जानाति च।

ग्रहीतृग्रहणग्राह्यसंयमसिद्धिषु ग्राह्यसंयमसिद्धिरेवं बोध्या—स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयो भवति। यथा महात्मना ज्ञानेश्वरेण भित्तिर्वाहनीकृता। तस्य भूतजयस्य फलं सिद्धित्रयम्—अणिमादिप्रादुर्भावः, कायसम्पत्, तद्धर्मानभिघातश्च। तत्राणिमा शरीरस्याणुत्वम्, यथा हनुमता लङ्कायां प्रवेशकाले कृतम्। महिमा—शरीरस्य योजनादिव्यापित्वम्, यथा हनुमता सुरसासमक्षे प्रकटीकृतम्। गरिमा—गुरुत्वम्, यथा हनुमता सौगन्धिककानने भीमसेनस्य समक्षे स्वीयबालधौ समारोपितम्। लघिमा—तूलादिवल्लघुत्वम्, यथा स्वोदरे ब्रह्माण्डं बिभ्रदपि भगवान् श्रीकृष्णो गोपबालकैः पृष्ठोपरि समारोप्य लीलयैवोह्यते स्म। प्राप्तिः—भूमिष्ठ एवाङ्गुष्ठाग्रेण चन्द्रं स्पृशतीत्यादिरूपमिन्द्रियाणां सामर्थ्यम्। यथा त्रिविक्रमावतारे भगवता भूमिष्ठेनैव त्रिभिः पदैस्त्रैलोक्यमाक्रान्तम्। प्राकाम्यम्—श्रुतदृष्टेष्विच्छानभिघातः, यद् यदिच्छति तत्सर्वं तदग्र उपतिष्ठति। ईशित्वम्—सर्वेषां भूतभौतिकानां शरीरवत् संकल्पमात्रेण प्रेरणम्। यथा ज्ञानेश्वरप्रेरणया भित्तिखण्डेन वाहनस्य कार्यं सम्पादितम्। वशित्वम्—भूतभौतिकानां गुणानां वश्यत्वं सत्यसंकल्पता च। यथा विषमप्यमृतत्वेन संकल्प्य भोजयञ्जीवयति। इत्यष्टावणिमादयः। तद्धर्मानभिघातः—विरोधकृतामभिघाताभावः। यथा शिलामप्यनुप्रविशति, जलमपि तं न क्लेदयति, दहनोऽपि न दहति, वायुश्च न चालयति, अनावरणेऽप्याकाशे स आवृतशरीरो भवति, सिद्धानामप्यदृश्यो जायते। रूपलावण्यवज्रसंहननत्वानि 'कायसम्पत्' इत्युच्यन्ते। यथा सौभरिणा वृद्धेनापि मान्धातृकन्यानां समक्षे रूपलावण्यसम्पत्प्रदर्शिता (विष्णुपुराणे भागवते चेयं कथा)।

अथ ग्रहणसंयमसिद्धिः—ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयस्ततो मनोजवित्वम्। यथा मारुतेर्मनोजवं मारुततुल्यवेगमित्यादिश्रवणात्। विकरणभावः, इन्द्रियाणां विकीर्णता—स्थूलदेहनैरपेक्ष्येण सर्वत्र वृत्तिलाभः। प्रधानजयः, प्रकृतेः स्वेच्छया परिणमनं च।

अथ ग्रहीतृसंयमसिद्धिः—सत्त्वपुरुषान्यताख्यातिमात्रस्य—१. सर्वभावाधिष्ठातृत्वम्—(प्रकृतिपुरुषविकाराणां स्वेच्छया प्रेरयितृत्वम्); २. सर्वज्ञातृत्वम्—(विशिष्य सर्वसाक्षात्करणम्) इति फलद्वयम्। इदं च सिद्धिद्वयम् 'विशोका' इत्युच्यते। ततो

वैराग्यादपि दोषबीजानां क्षये जाते कैवल्यम्। एतदेव सर्वसिद्धिमूर्धन्यं धन्यम्। एतत्सिद्धयेऽन्यतः सर्वतो दृढवैराग्यमपेक्ष्यते।

एताः सर्वाः सिद्धयो यत्र तत्र पुराणेषु वर्णिताः। अग्निपुराणे स्तम्भनमोहन-वशीकरणविद्वेषणोच्चाटनमारणादिमन्त्रास्तत्प्रयोगाश्च बहुधोपवर्णिताः (३१५ अध्याये)। त्रयोविंशत्युत्तरशततमेऽध्यायेऽन्तर्धानकरी मोहनी जम्भनी शत्रुबुद्धिप्रमोहिनी वैरिगणविध्वंसिनी चेत्यादयो विद्या वर्ण्यन्ते। अष्टाक्षरा मृतसञ्जीवनी विद्या चापि तत्रोपलभ्यते, यस्या माहात्म्यमेवमुच्यते—'मृतसंजीवनी विद्या अष्टार्णा जयकृद्रणे' इत्यादि। ईशानविद्या, तत्पुरुषविद्या, अघोरविद्या, कामदेवविद्या, सद्यो-जातविद्या, त्वरिताविद्या, पाशुपतास्त्रविद्या, ब्रह्मास्त्रविद्या चाग्निपुराणे विस्तरेण वर्णिता दृश्यन्ते। महाभारते शान्त्यनुशासनपर्वद्वये धर्मार्थकाममोक्षसिद्धये विविधानि साधनानि मञ्जूषामुद्रितधनानीव रक्षितानि लक्षितानि। अत एवेदं सडिण्डिम-घोषमुद्घोष्यते यद्—

धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्॥ इति।

इदमिह विशेषतोऽवधेयं यन्महाभारतं पुराणानि च मोक्षस्य भगवत्प्राप्तेरेव वा परमचरमपुरुषार्थतां प्रतिपादयितुं यतन्ते। महाभारतसारभूतायां श्रीमद्भग-वद्गीतायां तु निष्कामेन कर्मणा भक्त्या ज्ञानेन च परमपुरुषोत्तमस्य परमात्मनः श्रीकृष्णस्य प्राप्तेरेव प्राधान्यमुपदर्शितम्। एषैव परमा सिद्धिः। अस्यां सत्यामन्याः सिद्धयः स्वयमेवागत्य तथाविधस्य सिद्धिमतश्चरणौ चुम्बन्ति। तत्र निष्कामकर्मणा भगवदभ्यर्चनेन परा सिद्धिरेवं प्रतिपादिता—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥

भक्त्या यथा—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥

ज्ञानेन यथा—"ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" इत्यादि। श्रीमद्भागवते त्वकामस्य सर्वकामस्य मोक्षकामस्य च कृते तीव्रभक्तियोगेन परमपुरुषाराधनमेव परमकर्तव्यतया निर्दिश्यते—

अकामः सर्वकामो वा मोक्षकाम उदारधीः।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम्॥

पुरुषाराधनमृते कर्मणः साफल्यमेव न संभवति—'क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते' इति पुष्पदन्तः। तदिदमेकमेव साधनमन्तरायरहितममोघं भगवत्कृपासाध्यं सर्वैरेवाश्रयणीयमितीतिहासपुराणानां परममभिमतम्।

पुराणादिषु सिद्धीनामन्यान्यपि साधनानि निदर्शितानि यथा— नारीणां पातिव्रत्याचरणम्। अनेन सावित्र्याकाशगमनं धर्मराजस्य दर्शनं तेन सह संवादस्तद्वार्ताश्रवणमित्यादीनि परमाद्भुतानि कार्याणि साधितानि, पुत्रशतं भ्रातृशतं चासौ लेभे। एकया पतिव्रतया पतिसेवामाहात्म्येनैव व्यवहितविप्रकृष्टवस्तूनां दर्शनं साधितम्., तादृशवृत्तानां च ज्ञानमासादितम्। अत एव तपोऽभिमानिनं ब्राह्मणं सा धर्मव्याधसमीपं प्रेषितवती। मातुः पितुर्भक्तिभावेन सेवनम्—एतेन धर्मव्याधः सिद्धोऽभूत्। एते प्रसङ्गा महाभारते द्रष्टव्याः। श्रवणकुमारस्य मातृपितृभक्तिः सर्वतः प्रसिद्धैव। एतस्य चरितं रामायणे द्रष्टव्यम्। न्यायतः स्वस्ववर्णाश्रमधर्माणामनुष्ठानम्—यथोक्तं गीतायाम्—"स्वे स्वे कर्मण्यभिरतः संसिद्धिं विन्दते जनः"। न्यायतोऽन्यूनां तुलां धारयता तुलाधारेण कापि तादृशी सिद्धिः समासादिता, यथा जाजलिसदृशोऽपि महातपस्वी तत्समीपं ज्ञानं प्राप्तुमागमदिति महाभारते। व्रताद्यनुष्ठानम्—भागवतोक्तं पयोव्रतं पुंसवनव्रतमित्यादि निदर्शनम्। पयोव्रतानुष्ठानेनादितेः साक्षाद्भगवानेव पुत्रतामुपगतः। तीर्थयात्राकरणम्—महाभारते लोमशेन मार्कण्डेयेन च तीर्थयात्रामाहात्म्यमुपवर्णितम्। दानधर्मानुष्ठानम्—महाभारतेऽनुशासनपर्वणि दानधर्ममहिमाऽलौकिको वर्णितः। भगवन्नामकीर्तनम्—भगवन्नामकीर्तनेन सर्वसिद्धिसौलभ्यं पुराणेषु बहुत्रोपवर्णितम्। श्रीमद्भागवतेऽजामिलप्रसङ्गो विशेषेण द्रष्टव्यः। 'कलौ संकीर्त्य केशवम्' इत्यादिना कलावस्य साधनस्य सर्वतोऽतिरेको दर्शितः।

हरेर्नामैव नामैव हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥

विष्णुपुराणे—कलौ केशवकीर्तनादिति प्रतिपाद्य नामकीर्तनस्य कलावमोघत्वेन कलेः प्रशंसनं विहितम् । अतो हरिरेव सदा "श्रोतव्यः कीर्तनीयश्च स्मर्तव्यश्चेच्छताऽभयम्" इति दिक् ॥

---

# यमनियमजाः सिद्धयः

श्रीमहादेव उपाध्यायः, साहित्याध्यापकः, वा० सं० वि० वि०, वाराणसी।

यत्प्राप्त्यै वर्णिताः शास्त्रे योगपद्धतयोऽखिलाः।
तं क्लेशाद्यपरामृष्टं पुरुषं समुपास्महे ॥

इह खलु दुःखबहुले जगति मोक्ष एव मानवजीवनस्य परममुद्देश्यम्, तत्साधनतया चात्मसाक्षात्कारः। "तीर्णो हि तदा भवति हृदयस्य शोकात् कामादिकं मन एव मन्यमानः सन्नुभौ लोकावनुसञ्चरति। स यदत्र किञ्चित् पश्यति अनन्वागतस्तेन भवति" इत्यादिश्रुतिषु,

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥,
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः।
दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः ॥

इत्यादिस्मृतिषु च सुप्तपुरुषस्येव मुक्तपुरुषस्य तात्त्विकत्वेन प्रदर्शनात्।

मुक्तिसाधनत्वेन च शास्त्रेषु यमनियमासनप्राणायामधारणाध्यानसमाधयो वैशद्येन वर्णिताः। तत्राप्यन्तःकरणशुद्ध्यर्थमादौ यमा नियमाश्चोपवर्णिताः। तत्र यमाः पञ्च। उक्तं हि पातञ्जले योगसूत्रे साधनपादे—"अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः" इति। नियमाश्च तत्रैव—"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति। एते यमनियमाः सप्रयोजनप्रदर्शनं प्रदर्शिता विष्णुपुराणे—

ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान्।
सेवेत योगी निष्कामो योग्यतां मनसो नयन् ॥
स्वाध्यायशौचसन्तोषतपांसि नियतात्मना।
कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः ॥
एते यमाः सनियमाः पञ्च पञ्च प्रकीर्तिताः।
विशिष्टफलदाः काम्या निष्कामाणां विमुक्तये ॥

यदि चाहिंसादिभ्यो विपरीतास्तर्काः = विपरीतविचाराः—हनिष्याम्यवश्यमेनमहमपकर्तारम्, असत्यमपि वदिष्यामि, अस्य द्रव्यमपि ग्रहीष्यामि, परललनायामस्यां ग्राम्यधर्माचरणशीलो भविष्यामि, अस्य परिग्रहेषु स्वामित्वं प्राप्स्यामीत्यादयो जायेरन्, तदोन्मार्गप्रवृत्तविपरीतविचारेण बाध्यमानस्तद्विरोधिनो भावयेत्—अस्मिन् प्रदीप्तप्रपञ्चानले पतितोऽहं योगधर्मं शरणं प्रपन्नः। तं विहाय दुर्विचारानङ्गीकुर्वन् उन्मार्गे प्रवृत्त इत्येवं तद्विरोधभावनं कुर्वता वितर्कैर्यमादीनां बाधने प्राप्ते सति दुःखादिफलकत्वेन ते हेयाः। एतदेव सर्वं भगवता कृष्णद्वैपायनेन कूर्मपुराणस्योत्तरार्धे एकादशाध्याये वैशद्येन वर्णितम्—

अहिंसासत्यमस्तेयं ब्रह्मचर्यापरिग्रहौ।
यमाः संक्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम्॥ इत्यादिना।

यत्तु वायुपुराणे उपोद्घातपादे षोडशाध्याये—

अस्तेयं ब्रह्मचर्यं च अलोभस्त्याग एव च।
व्रतानि चैव भिक्षूणामहिंसा परमार्थिता॥
अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।
नित्यं स्वाध्याय इत्येते नियमाः परिकीर्तिताः॥

इति यमनियमानां स्वरूपमुपवर्णितम्, तत्र स्वीकाराभावात् त्यागोऽनुपादानरूपोऽपरिग्रहः, स एवालोभः; अन्यथा यमानां षट्त्वापत्तेः। व्रतशब्देन सत्यमेकादश्युपवासादिकञ्च व्रतं गृह्यते, कृच्छ्रचान्द्रायणादीनां तपोरूपाणां व्रतानां तु नियमेषु परिगणनात्।

सन्तोषे सति कुतश्चिदपि लिप्साव्याघाताप्रसङ्गाद् मनःक्षोभरूपस्य क्रोधस्याप्रसक्तिः। अतः कार्यकारणयोरभेदाद् अक्रोधः सन्तोषरूप एव।

"गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः" इत्यादिशास्त्रप्रसिद्ध्या गुर्वीश्वरयोरभेदे तच्छुश्रूषा ईश्वरप्रणिधानम्। शरीरशोषणहेतुभूताऽऽहारलाघवन्तु तप एव। अतो नात्र पूर्वोक्तयमनियमस्वरूपवैमत्यम्। एवमेव मार्कण्डेयपुराणे एकचत्वारिंशाध्याये योगचर्यावर्णने—

अस्तेयं ब्रह्मचर्यं च त्यागो लोभस्तथैव च।
व्रतानि पञ्च भिक्षूणामहिंसापरमाणि वै॥

अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् ।
नित्यस्वाध्याय इत्येते नियमाः पञ्च कीर्तिताः ॥

इति यमनियमानां स्वरूपं प्रदर्शितम् ।

यत्तु श्रीमद्भागवते एकादशस्कन्धे एकोनविंशतितमेऽध्याये—"यमः कतिविधः प्रोक्तो नियमो वारिकर्शन !" इत्याद्युद्धवप्रश्नानन्तरं भगवत्प्रतिवचनम्—

अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसंचयः ।
आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥
शौचं जपस्तपो होमः श्रद्धातिथ्यमदर्चनम् ।
तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥
एते यमाः सनियमा उभयोर्द्वादश स्मृताः ।
पुंसामुपासितास्तात यथाकामं दुहन्ति हि ॥

इति यमानां नियमानां च द्वादशविधत्वं प्रतिपादितम्, तत्रासङ्गस्याऽसंचयापरपर्यायापरिग्रहेणैव ग्रहणम् । ब्रह्मचर्यस्य च ह्रीपूर्वकत्वाद् ब्रह्मचर्येणैव ह्रियो गतार्थता ।

सर्वत्रैव परमेश्वरसत्ताभावनयाऽऽस्तिक्यबुद्ध्यैव हिंसाया अभावः, तयैव च क्षमा सर्वतोऽभयं च । अत एतेषामहिंसया कार्यकारणभावापन्नानामहिंसायामेवान्तर्भावः । मौनं मितभाषित्वमित्यस्य सत्येनैव परिग्रहः, स्थैर्यं त्विन्द्रियाणामचाञ्चल्यमेव, तस्य ब्रह्मचर्येणैव परिग्रहः ।

नियमेष्वपि जपस्य होमस्य तीर्थाटनस्य च तपस्यन्तर्भावः । "अतिथिदेवो भव, आचार्यदेवो भव" इत्यातिथ्याचार्ययोर्भगवद्रूपतावधारणादातिथ्यस्याचार्यसेवनस्य चेश्वरप्राणिधानेऽन्तर्भावः, सर्वस्मिन्नात्मभावनया परार्थेहा ईश्वरप्रणिधानमेव । एतेषां श्रद्धापूर्वकत्वात् कार्यकारणयोरभेदाद् एतेष्वेव श्रद्धाया अन्तर्भावः । इत्येवं द्वादशानां यमानां नियमानां च पञ्चस्वेवान्तर्भावः । शिष्यबुद्धिवैशद्यार्थन्तु संख्याधिक्येन वर्णनम् । अतो न व्यासोक्तिषु कश्चिद्विरोधः ।

अथ यमनियमाभ्यासजनिताः सिद्धयः प्रदर्श्यन्ते । उक्तं हि पातञ्जलदर्शने साधनपादे—"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" इति । शाश्वतिकविरोधा

अप्यहिनकुलादयः प्रतिष्ठिताहिंसस्य सन्निधाने तच्चित्तानुवर्तिनः परस्परवैरं परित्यजन्ति। यदा हि परस्परमपि न वैरायन्ते, तदा प्रतिष्ठिताहिंसस्यानिष्टमाचरन्तीति का कथा। अत एव शिवपुराणे वर्णितस्य शङ्करस्य सन्निधौ वसन्तो दर्वीकरादयो नानिष्टमुत्पादयन्ति, न च ततो बिभ्यति।

सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्, क्रियासाध्यौ धर्माधर्मौ क्रिया, तत्फलं च स्वर्गनरकादि, तदाश्रयतीत्याश्रयः, सत्यप्रतिष्ठः। धार्मिको भव, नरकं व्रज, इत्येवं यं पुरुषमाह स पापोऽपि धार्मिको भवति, पातित्यमेति च। किञ्च, सर्वत्रैवास्य वागविफला जायते। एतच्च तत्तत्पुराणेषु वशिष्ठविश्वामित्राद्युपाख्यानेषु प्रसिद्धम्। क्वचिच्च जन्मान्तरीणनियमाभ्यासजनिता अपि सिद्धिर्दृश्यते। यथा महर्षिपुत्रस्य परीक्षितं प्रति सप्तमेऽह्नि तक्षककृतदंशविषये वाक्प्रयोगः।

"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्"। सर्वदिक्स्थितानि रत्नान्यस्य समीपमुपतिष्ठन्ते। एतदुदाहरणत्वेन रघुयुधिष्ठिरादयः पुराणेषु प्रसिद्धाः। ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः। वीर्यं सामर्थ्यम्। यस्य लाभात् प्रतिघातरहितानणिमादीन् गुणान् लभते। तथा तारादिभिरष्टाभिः सिद्धिभिरूहाद्यपरनामधेयाभिर्युक्तः सन् शिष्येषु योगतदङ्गविषयं ज्ञानं संक्रामयितुं समर्थो भवति। ऊहादयश्च सांख्यतत्त्वकौमुद्यां निर्दिष्टाः—

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।
दानं च सिद्धयोऽष्टौ..........................॥ इति।

ता एव तारसुतारतारतारम्यकसदामुदितप्रमोदप्रमुदितप्रमोदमाननामधेयाः सिद्धयः कथ्यन्ते। हनूमदादय एतदुदाहरणत्वेन तत्तत्पुराणेषु प्रसिद्धाः। अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः। देहेन्द्रियादिरभिरभिसम्बन्धो जन्म, तस्य कथन्ता किंप्रकारता? तस्या सम्बोधः साक्षात्कारः। अतीतस्य वर्तमानस्य च जन्मनः स्वरूपं जिज्ञासते। के भविष्याम इत्यनागतमपि जिज्ञासते। जिज्ञासानन्तरं च तज्ज्ञानम्। तदुदाहरणानि तु तत्तत्पुराणवर्णितेषु ब्रह्मर्षिराजर्षिवृत्तेषु प्राचुर्येणोपलभ्यन्ते।

नियमाभ्यासजनितसिद्धिषु "शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः" स्वाङ्गे जुगुप्सायां शौचं कुर्वन् शरीरदोषदर्शनशीलः शरीराध्यासरहितो यतिर्भवति। किञ्च, परैरसंसर्गः शरीरस्वभावावलोकी स्वं शरीरमप्याक्षालयन् शरीरशुद्धिमपश्यन् कथं परशरीरैर्मलिनैः शवतुल्यः संसृष्टो भवेत्। अन्यच्च शौचस्थैर्यात् चित्तसत्त्वममल.

जायते, वैमल्याच्च स्वच्छता, तत एकाग्रता, ततश्चित्ताधीनानामिन्द्रियाणां जयः, ततो बुद्धिसत्त्वस्यात्मदर्शनयोग्यता। एतदुदाहरणत्वेनाश्वपत्यादिराजर्षयः, व्यासादयो महर्षयश्च पुराणेषु प्रसिद्धाः। सन्तोषादनुत्तमसुखलाभः। अनुत्तमं च न विद्यते उत्तमं यस्मात्। तथा चोक्तम्—"यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षय-सुखस्यैते नार्हतः षोडशीं कलाम्॥" इति। यथा चोक्तं "पूरौ तारुण्यमर्पयता ययातिना—"या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यताम्। तां तृष्णां सन्त्यजन् प्राज्ञः सुखेनैवाभिपूर्यते॥" इति।

"कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः"। साधितं तप आवरणमलं दूरयति। तदपगमात् अणिमाद्या कायसिद्धिः, दूराच्छ्रवणदर्शनाद्येन्द्रियसिद्धिश्च। संजयादयः एतदुदाहरणम्। "स्वाध्यायादिष्टदेवतासम्प्रयोगः"। देवा ऋषयः सिद्धाश्च स्वाध्याय-शीलस्य दर्शनपथमुपयान्ति, अस्य कार्यञ्च निर्वहन्ति। यथा युधिष्ठिरपार्श्वे विपिने व्यासमहर्षेरागमनं तदभिलषितनिर्वहणं च। "समाधिसिद्धिरीश्वरप्रणिधानात्"। परमेश्वरे समर्पितसर्वभावस्य समाधिसिद्धिर्जायते। देशान्तरे कालान्तरे देहान्तरे च सर्वं याथार्थ्येन जानाति।

ननु ईश्वरप्रणिधानादेव सम्प्रज्ञातस्य समाधेरङ्गिनः सिद्धौ सप्तानामङ्गानां वैयर्थ्यं प्राप्तमिति चेन्न, इतरेषामङ्गानामीश्वरप्रणिधानसिद्धौ सम्प्रज्ञातसिद्धौ चोभयत्रो-पयोगान्न वैयर्थ्यम्। यमादीनामन्तःकरणाशुद्ध्यादिक्षयरूपादृष्टद्वारोपयोगः। आसनादीनां षण्णां दृष्टद्वारोभयत्रोपयोगः। एकस्योभयार्थत्वं संयोगपृथक्त्वन्यायेन, संयोगस्य विनियोजकवाक्यस्य पृथक्त्वं भिन्नत्वम्। यथा—"दध्ना जुहोति" इत्यग्निहोत्रे श्रूयते। पुनश्च "दध्नेन्द्रियकामस्य जुहुयात्" इत्याम्नायते। तत्र संशयः, किं काम्यार्थमेव दधि नित्येऽपि, उत नेति। तत्र फलार्थत्वेनानित्यसंयोगस्य दध्नो नित्यप्रयोगाङ्गत्वं न युक्तम्। अतो नित्येऽपि दधिश्रवणं काम्यार्थमेव। यद् दध्ना जुहोति तदिन्द्रियार्थ-मिति। अतः काम्यार्थमेव दधिविधानमित्येवं प्राप्ते सिद्धान्तः—"एकस्य तूभयत्वे संयोगपृथक्त्वम्"। एकस्य दध्यादेरुभयत्वे क्रत्वर्थपुरुषार्थत्वे संयोगस्य क्रत्वर्थत्व-पुरुषार्थत्वबोधकविनियोजकवाक्यस्य पृथक्त्वं भिन्नत्वं नियामकम्। तद्वदत्रापि सप्तानामङ्गानामीश्वरप्रणिधानसिद्ध्यर्थत्वं सम्प्रज्ञातसिद्ध्यर्थत्वं चावगन्तव्यम्। ननु सम्प्रज्ञातस्येश्वरप्रणिधानानन्तरभावित्वे ईश्वरप्रणिधानं सम्प्रज्ञातस्यान्तरङ्गसाधनम्।

तथा च धारणाध्यानसमाधीनां नान्तरङ्गत्वमिति चेन्न; यदनन्तरं यद्भवति तत्तस्यान्तरङ्गमिति नियमोऽत्र नाश्रीयते, किन्तु यस्य साध्यसमानगोचरत्वं तस्यान्तरङ्गत्वम्। तथा च धारणादित्रयस्य तथाभूतत्वेनान्तरङ्गत्वम्, ईश्वरप्रणिधानं तु नैवंविधमिति नान्तरङ्गमिति। इत्थं यमनियमानां स्वरूपं दर्शनपुराणप्रसिद्धं तदभ्यासजनितसिद्धीनामुदाहरणानि च पुराणदृष्ट्या संक्षेपेण प्रदर्शितानि। प्रायशः सर्वेषु पुराणेषु बहुशः प्रदर्शितोऽप्ययं विषयो विस्तरभयाद् न प्रदर्शितः। यावदासन् भूमिवलये एताः सिद्धयः, तावदेव सुखस्य शान्तेश्च साम्राज्यमासीत्। एतद्विस्मरणेनैव साम्प्रतं क्लेशभाजो भूयिष्ठा जना अनुभूयन्ते।

अतः पूर्वोक्तानां सिद्धीनां मूलं यमनियमादिव्यावहारिकपारमार्थिकसुखेप्सुभिरवश्यमभ्यसनीयमिति ॥



# स्तम्भनक्रिया

श्रीकपिलदेवत्रिपाठी, पुराणाध्यापकः, वा० सं० वि० वि०, वाराणसी ।

स्तम्भनार्थकात् 'स्तम्भ'धातोर्ल्युट्प्रत्यये कृते 'स्तम्भनम्' इति सिध्यति । तस्यार्थो जडीकरणमिति । उदाहरणं यथा बगलामुखीस्तोत्रे—"दुष्टस्तम्भनमुग्रविघ्नशमनम्" इत्यादि । स्तम्भनक्रियेयं पुराणेषु महाभारतादिप्राचीनग्रन्थेषु च बहुधाऽवलोक्यते । यथा—(१) सुहृद्भिर्भ्रातृभिः पुत्रैश्च विहीनो राजा दुर्योधनो विषण्णमना भूत्वा द्वैपायनाख्यं ह्रदं प्राविशत्, तज्जलञ्च दैव्या मायया सोऽस्तम्भयत । एषा कथा महाभारतस्य शल्यपर्वणि विस्तरेण कथिता । यथा—

एवमुक्त्वा महाराज प्राविशत्तं महाह्रदम् ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥

(अ० २९।५४)

वासुदेवमिदं वाक्यमब्रवीत् कुरुनन्दनः ।
पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम् ॥
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ।
दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम् ॥

(२) रघुवंशस्य द्वितीये सर्गे "बाहुप्रतिष्टम्भविवृद्धमन्युः" इत्यादिना बाहुस्तम्भनमिषेणास्त्रस्तम्भनमपि स्फुटीकृतं महाकविना कालिदासेन नूनं पुराणमूलकमेव ।

(३) अश्विनीकुमाराभ्यां सोमरसदानाय कृतसंकल्पस्तरुणो महर्षिश्च्यवनस्तयोरुपरि वज्रं प्रहरत इन्द्रस्य बाहुं स्तम्भयामासेत्यादिकथा भारते पुराणेषु चोपलभ्यते । यथा—

ततोऽसौ प्राहरद् वज्रं घोररूपं शचीपतिः ।
तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ॥

(म० व०, अ० १२४)

इत्थं बहून्युदाहरणानि प्राचीनग्रन्थेषु स्तम्भनक्रियाविषये समुपलभ्यन्ते। विचारणीयोऽयं सिद्धिविषयो विदुषां पुरस्तादुपन्यस्यते पुराणतन्त्रादिग्रन्थानुसारेण।

तन्त्रशास्त्रे षट्कर्माणि प्रसिद्धानि। यथा—

शान्तिवश्यस्तम्भनानि विद्वेषोच्चाटनं ततः।
मारणान्तानि शंसन्ति षट्कर्माणि मनीषिणः॥

तत्र स्तम्भनलक्षणमित्थं प्रतिपादितम्—"प्रवृत्तिरोधः सर्वेषां स्तम्भनं तदुदाहृतम्।" प्रवृत्तिनिरोध एव स्तम्भनमिति फलितार्थः। एषां स्तम्भनादीनां षट्कर्मणां सिद्धिविषये तन्त्रेषु देवताकालमुद्रादीनां सम्यगुल्लेखो विहितः। तान् ज्ञात्वैव विचक्षणः यथोक्तफलसिद्धये तानि कर्माणि प्रयुञ्जीतेति निर्देश आदेशश्च तन्त्राणाम्। यथा—

देवताकालमुद्रादीन् सम्यग् ज्ञात्वा विचक्षणः।
षट्कर्माणि प्रयुञ्जीत यथोक्तफलसिद्धये॥

तत्र षट्कर्मणां क्रमशो देवता यथा—

रतिर्वाणी रमा ज्येष्ठा दुर्गा काली यथाक्रमम्।
षट्कर्मदेवताः प्रोक्ताः कर्मादौ ताः प्रपूजयेत्॥

तत्र स्तम्भनकर्मणि रमादेवतायाः पूजनं विधेयम्। अस्य स्तम्भनकर्मणः कृते शिशिरर्तुः श्रेष्ठः। यथा—"शिशिरः स्तम्भने प्रोक्तः।" तिथिश्च पौर्णमासी विहिता। यथा—"पौर्णमासी च विज्ञेया तिथिः स्तम्भनकर्मणि।" अस्मै कर्मणे पश्चिमा दिक् प्रशस्ता। यथा—"पश्चिमे स्तम्भनं विद्यादुत्तरे शान्तिकं भवेत्।" मुद्रायाः संकेतोऽपि तत्रैव निर्दिष्टः। यथा—

षण्मुद्रा क्रमतो ज्ञेया पद्मपाशगदाह्वयाः।
मुसलाशनिखड्गाख्याः शान्तिकादिषु कर्मसु॥

तत्र—गदामुद्रा स्तम्भने प्रशस्ता। तत्तत्कर्मणां स्थानस्यापि तत्र संकेतो विहितः। स्तम्भने पृथिव्या उल्लेखः। यथा—"स्तम्भने पृथिवी शस्ता।" इत्थं न्यासादीनामपि वर्णनं कृतं तत्र तत्र तन्त्रग्रन्थेषु; विस्तरभिया न लिख्यते। फेत्कारिणीतन्त्रे स्तम्भनविषयिणी या चर्चा चर्चिता सापि विचारणीया। यथा—

(१) उलूककाकयोः पक्षौ गृहीत्वा मन्त्रवित्तम आलिख्य वै शरावे निशायाञ्च साध्याक्षरसम्पुटितं मन्त्रं स्थापितपवनं सहस्रजप्तं चतुष्पथे निखनेत्। स्तम्भनमेतदवश्यं भविता जगतां नात्र सन्देहः।

(२) कृत्वा प्रतिकृतिमथवा श्मशानाङ्गारकेशशववसनजां सम्यगधिष्ठितपवनां हृद्गतनाम्नीं समन्त्रललाटां वसनाधिष्ठितपवनां सहस्रजप्तां तदुल्कया वसनां दग्धां कृत्वा निखनेत्, श्मशानदेशे सपदि वाक्स्तम्भः।

(३) आलिख्य चेष्टकायुगले मन्त्रं सनामसम्पुटितम्, निशया निशीथकाले सहस्रजप्तं प्रतिष्ठितप्राणम्; बन्धनमतितीक्ष्णतरं स्तम्भनमतितीक्ष्णाम्बुनिःक्षिप्तम्।

लिखितमन्त्रचितामयकीलकं सहितकर्मसनामसमारुतम्।
कृतजपं त्रिसहस्रकसंख्यया पथि खनेदथ याननिवारणम्॥
विहितनिम्बतरौ रिपुनामयुतं मनुमिमं निशया कृतनामकम्।
नवसहस्रजपादिसुसाधितं पथि खनेदथ सैन्यनिरोधनम्॥

न केवलं तन्त्रेष्वेव स्तम्भनविषयिणी चर्चा, किन्तु पुराणेष्वपि। यथाऽग्निपुराणे—

भूर्जे कूर्मं समालिख्य ताडनेन षडङ्गुलम्।
मुखपादचतुष्केषु ततो मन्त्रं न्यसेद् द्विजः॥
चतुष्पादेषु क्रींकारं ह्रींकारं मुखमध्यतः।
गर्भे विद्यां ततो लिख्य साधकं पृष्ठतो लिखेत्॥
मालामन्त्रैस्तु संवेष्ट्य इष्टकोपरि संन्यसेत्।
पिधाय कूर्मपृष्ठेन करालेनाभिसम्पठेत्॥
महाकूर्मं पूजयित्वा पादप्रोक्षन्तु निक्षिपेत्।
ताडयेद् वामपादेन स्मृत्वा शत्रुञ्च सप्तधा॥
ततः सञ्जायते शत्रोः स्तम्भनं मुखरागतः।
कृत्वा तु भैरवं रूपं मालामन्त्रं समालिखेत्॥

ओं शत्रुमुखस्तम्भनी कामरूपा आलीढकरी ह्रीं फ्रें फेत्कारिणी मम शत्रूणां देवदत्तानां मुखं स्तम्भय स्तम्भय मम सर्वविद्वेषिणां मुखस्तम्भनं कुरु कुरु ओं हूँ फें फेत्कारिणि! स्वाहा।

फट् हेतुश्च समालिख्य तज्जपान्तं महाबलम् ।
वामेनैव नगं शूलं संलिखेद्दक्षिणे करे ।
लिखेन्मन्त्रमघोरस्य संग्रामे स्तम्भयेदरीन् ॥ इति ।

इत्थं मन्त्रप्रयोगतः शत्रूणां स्तम्भनं भवतीति वर्णितम् ।

गरुडपुराणे अग्निजलादिस्तम्भनविषयेऽनेकान्यौषधानि । यथा—

(१) मुण्डी त्वक् च वचा मुस्तं मरिचं तगरं (नागरं) तथा ।
चर्वित्वा च त्विमं सद्यो जिह्वया ज्वलनं लिहेत् ॥

(२) रक्तपाटलमूलं तु अवष्टब्धं च मूलकैः ।
दिव्यं स्तम्भयते क्षिप्रं पयःपिण्डं जलान्तकम् ॥

(३) गोरोचनां भृङ्गराजं चूर्णीकृतघृतं समम् ।
दिव्याम्भसः स्तम्भनं स्याद् मन्त्रेणानेन वै तथा ॥

[ दिव्यस्तम्भश्च पीत्वा ]

मन्त्रः—ओं ह्यं अग्निस्तम्भनं कुरु कुरु ।
ओं नमो भगवते जलं स्तम्भय स्तम्भय
सं सं सं के क के क चर चर ।
[ सं समं सके कके कचर ]

जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ।

तथा च—

(४) मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत् ।
हस्तौ संलेपयेत्तेन त्वग्निस्तम्भनमुत्तमम् ॥

(५) शाल्मलीरसमादाय खरमूत्रे निधाय तम् ।
अग्न्यादौ निक्षिपेत्तेन ह्यग्निस्तम्भनमुत्तमम् ॥

(६) वायस्या उदरं गृह्य मण्डूकवसया सह ।
गुटिकां कारयेत्तेन ततोऽग्नौ संक्षिपेत् सुधीः ॥
एवमेतत्प्रयोगेण अग्निस्तम्भनमुत्तमम् ।

इत्थं बहुत्र स्तम्भनविषयिण्यश्चर्चाश्चर्चिताः पुराणेतिहासग्रन्थेषु ।

अत्रायं निष्कर्षः—स्तम्भनक्रियाऽतिप्राचीना; सा च मन्त्रसाध्या, औषधिसाध्या, इन्द्रजालसाध्या। तत्र मन्त्रसाध्या उत्तमा, औषधिसाध्या मध्यमा, इन्द्रजालसाध्या चाधमा। सर्वत्र गुरूणामावश्यकता; गुरुं विना कापि सिद्धिर्न भवति। गुरुकृपयैव सर्वाः सिद्धयो हस्तामलकीभवन्ति। अस्मिन् युगेऽप्येताः सर्वाः सिद्धयः साधयितुं शक्याः। तत्र मन्त्रेण या सिद्धिर्भवति तां कश्चिन्मन्त्रवित्तम एव कर्तुं प्रभवति, नान्यः। मन्त्राणां सम्यग् वेत्ता कश्चित् साधक एव भवितुं शक्यः। सा साधना यथानियमं कर्तव्या, नियमास्तु समुल्लिखिता एव तत्र तत्र तन्त्रग्रन्थेषु पुराणादिग्रन्थेषु च।

अग्निस्तम्भनादिविषये गरुडपुराणे यान्यौषधद्रव्याणि वर्णितानि तान्यपि प्रयोक्तव्यानि विधिनैव। प्रयोगतो नूनमेव यथातथ्यज्ञानं भविष्यति। या चैन्द्रजालिकी स्तम्भनक्रिया, सा त्वद्यापि दरीदृश्यत एव। तत्रैन्द्रजालिका एव प्रमाणम्।

इत्थं मन्ये, पुराणेतिहासवर्णितेयं स्तम्भनक्रिया प्राचीना सत्यपि नवीनेऽस्मिन् युगे येन केन प्रकारेण प्रचलति। तत्रानुसन्धानस्य महत्यावश्यकता। अधुना गर्भनिरोधविषय ओषधीनामन्वेषणं भवति। किमस्माकं पुराणं तत्र मौनमालम्बते? नहि, दृश्यतामयं श्लोकः—

पलाशस्य तु बीजानि क्षौद्रेण सह पेषयेत्।
रजस्वला तु पीत्वा स्यात् पुष्पगर्भविवर्जिता॥

(ग० पु०, अ० १७९।२८)

एवमन्येऽपि प्रयोगा आयुर्वेदग्रन्थेषु सन्ति। तेषामुल्लेखो विस्तरभियाऽत्र न विहितः।

अस्माकं देशोऽधुना स्वतन्त्रः सांस्कृतिकं सामाजिकं राजनीतिकञ्चोन्नयनं चिकीर्षति, सांस्कृतिकोन्नतये संस्कृतविद्यायास्तन्निहितनिगमागमपुराणादिविद्यायाश्च सम्यगुन्नयनं वाञ्छतीति शुभलक्षणम्। तत्र तत्र विकीर्णानां ज्ञानराशीनामन्वेषणं विधेयम्, भाषायामनूद्य सर्वसुलभं यथा स्यात्तथा च करणीयमिति निवेद्याहं विरमामि॥

# अस्त्रसिद्धिः

श्रीरमाकान्तझा, प्राध्यापकः, आर्यमहिलामहाविद्यालयः, वाराणसी ।

योगशास्त्रेऽणिमाद्यष्टसिद्धीनां विवेचनं समुपलभ्यते । तत्राभ्यासेनैतादृशीनामपि शक्तीनां स्वायत्तीकरणं भवति स्म, यासां प्रभावेण साधका लघोरपि लघुतरं महतोऽपि महत्तरं रूपं धारयितुं समर्था आसन् । मुख्यतो मन्त्रहठलयराजयोगानां चतुर्णामपि योगाङ्गानामुपासनाभिरुपासका विभिन्नविधाः स्थूलसूक्ष्मसिद्धीः प्राप्तुमर्हन्ति स्म । आसां हि सिद्धीनां साधनोपायः पातञ्जलयोगसूत्रे सम्यग् विवेचित इति नाविदितं केषामपि सिद्धितत्त्वविदाम् ।

मन्त्रोपासनाभ्यामलौकिकशक्तीनां प्राप्तिरेव सिद्धिरिति लोके प्रसिद्धिः । अणिमादिसिद्धिव्यतिरिक्ता अन्या अपि सिद्धयः श्रूयन्ते, यासु 'अस्त्रसिद्धिः' प्रस्तुतनिबन्धस्य प्रतिपाद्यो विषयः । अत्र 'अस्त्र'शब्दः समरे प्रयोगार्हाणां समस्तानामप्यायुधानामुपलक्षकः । अस्त्रसिद्धेरभिप्रायस्तु सामरिकदृष्ट्या विविधशस्त्रप्रयोगसाफल्यमेव । भारतीयसंस्कृतेः प्रतिनिधिभूते रामायणमहाभारताख्ये साहित्यरत्नेऽस्त्रसिद्धीनां चमत्कृतिर्दरीदृश्यते, इदमेव ग्रन्थरत्नद्वयमुपजीव्यतया स्वीकृत्य परवर्तिभिः साहित्यपुरोधोभिर्विरचितेषु काव्यनाटकेष्वस्त्रसिद्धिप्रसङ्गो मिलत्येव । अस्याः सिद्धेः प्राथमिकं निदर्शनं देवासुरसंग्रामे वृत्रासुरवधाय दधीचिमुनेरस्थिसमूहनिर्मितो वज्रविशेषोऽस्ति । अयं हि प्रसङ्गोऽस्त्रसिद्धेः प्रारम्भिकं रूपमिति वक्तुं शक्यते ।

जृम्भकास्त्रम्—अस्त्रेष्वेतादृशानामप्यस्त्राणामुल्लेखो विद्यते, येषां सिद्धिर्गुरुपरम्पराश्रितासीत् । एषु जृम्भकास्त्रस्य विशिष्टं स्थानं विद्यते । अस्य चर्चा वाल्मीकिरामायणे वर्तते । मर्यादापुरुषोत्तमेन श्रीरामेणास्त्रमिदं कौशिकात् प्राप्तमिति श्रूयते । तस्मादपि रामात् तत्पुत्रयोर्लवकुशयोर्जृम्भास्त्रं स्वत एवायातमिति शास्त्रप्रसिद्धिः । अस्यास्त्रस्य विषये शोभनं विवेचनं भवभूतिकृतोत्तररामचरितस्य प्रथमपञ्चमसप्तमाङ्केषु कृतमस्ति । पञ्चमाङ्के सुमन्त्रेण चन्द्रकेतुं प्रति जृम्भकास्त्रविषय एवमुक्तम्—

कुशाश्वतनया ह्येते कृशाश्वात् कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता इति ॥

( उत्तर० ५।१५ )

रामोऽप्यस्य महत्त्वं वर्णयन्नाह—

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदां तपांसि ।
एतान्यदर्शन् गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥

अनन्तरं हि रामः सीताप्रसूतिं प्रत्यपि जृम्भकास्त्रप्राप्तिं निर्दिशन्नुवाच—"सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति"। अस्य पुष्टिश्च लवचन्द्रकेतुयुद्धप्रसङ्गेन भवति मन्त्रद्वाराऽस्य शस्त्रस्य प्राकट्यमिति सुमन्त्रश्चन्द्रकेतुमुपदिशति—"वत्स ! मन्ये, कुमारकेनानेन जृम्भकास्त्रमामन्त्रितमिति"। स्वयमेव जृम्भकास्त्रमपि लवकुशयोर्निवासार्थं सीतां प्रार्थयते—

देवि ! सीते ! नमस्तेऽस्तु गतिनौं पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः ॥

पूर्वोक्तैः प्रसङ्गैरित्थं निश्चीयते—यद् गुरुपरम्परातः प्राप्तव्यस्य जृम्भकास्त्रसमस्यास्त्रविशेषस्यावाहनं मन्त्रपूर्वकं कृत्वा युद्धे प्रयोगः क्रियते स्म । जृम्भकास्त्रस्य प्रयोगो विशेषतः शत्रुसैन्यस्तम्भनायैव भवति स्म ।

ब्रह्मनागपाशौ—अस्त्रसिद्धेर्नानाकोटौ ब्रह्मपाशनागपाशयोः प्रयोगः शत्रुपक्षस्य वशीकरणायाभवत् । अशोकवाटिकाविध्वंसकं हनूमन्तं वशीकर्तुं रावणसुतेन शक्रजिता मेघनादेन ब्रह्मपाशः प्रयुक्तः, तेनैव च समरे साक्षाद् रामलक्ष्मणौ जेतुमसमर्थेन सता तौ नागपाशेन बद्धौ । रावणेनापि ब्रह्मपाशेन ससैन्यौ रामलक्ष्मणावाबद्धौ । ससुतो दशग्रीवो ब्रह्मणः प्रसादात् पाशप्रयोगे सिद्धहस्त आसीत् ।

ब्रह्मास्त्रम्—महास्त्रस्यास्यापि प्रसङ्गो वाल्मीकीयरामायणे युद्धकाण्डे समायातः । रामरावणयोर्विकटं युद्धं प्रवृद्धमासीत् । उभावपि स्वस्वरणकौशलपरिचयं प्रदर्शितवन्तौ । रामस्ताटकादिवधहेतुकैः स्वप्रसिद्धशरै रावणस्य शिरांसि चिच्छेद, किन्तु

रावणो नैव मृतः। ततो रामो भृशं चिन्तयामास। चिन्तितं तं दृष्ट्वेन्द्रसारथिर्मातली रामं प्रबोधयन्नाह—

अथ संस्मारयामास मातली राघवं तदा।
अजानन्निव किं वीर त्वमेनमनुवर्तसे॥
विसृजास्मै वधाय त्वमस्त्रं पैतामहं प्रभो।
विनाशकालः कथितो यः सुरैः सोऽद्य वर्तते॥

एवं मातलिना स्मारितो रामो महास्त्रं तद् गृहीतवान्। तच्च ब्रह्मास्त्रं पुरा ब्रह्मणा स्वयमिन्द्राय नि र्मितम्। भगवताऽगस्त्येन च तद् रामाय प्रदत्तम्। यदा रामेण मन्त्राराधनपूर्वकं वैदिकविधिना तन्महास्त्रं स्वकार्मुके न्यस्तम्, तदा सर्वे प्राणिनः सन्त्रस्ताः संजाताः, वसुन्धरापि चञ्चलाऽभूत्। तथाहि—

अभिमन्त्र्य ततो रामस्तं महेषुं महाबलः।
वेदोक्तेन विधानेन संदधे कार्मुके बली॥
तस्मिन् सन्धीयमाने तु राघवेण शरोत्तमे।
सर्वभूतानि संत्रेसुश्चचाल च वसुन्धरा॥

इत्थं रामो दशकन्धरस्य मर्मस्थलं लक्षयित्वा महेषुं प्रहितवान्। स च महेषुरमोघ आसीत्। अतो दशग्रीवस्य हृदयं विभिद्य धरणीतलं विवेश, रावणं च विनाश्य पुनरपि रामसमीपमाजगाम। तथाहि—

स विसृष्टो महावेगः शरीरान्तकरः शरः।
विभेद हृदयं तस्य रावणस्य दुरात्मनः॥
रुधिराक्तः सवेगेन शरीरान्तकरः शरः।
रावणस्य हरन् प्राणान् विवेश धरणीतलम्॥
स शरो रावणं हत्वा रुधिरार्द्रीकृतच्छविः।
कृतकर्मा निभृतवत् स्वतूणीं पुनरागमत्॥

तस्य च ब्रह्मास्त्रस्यैकमिदं वैशिष्ट्यं यत्तद्धि प्रतिपक्षिणः प्राणान् विनाश्य पुनः प्रयोक्तुरेवान्तिके आगच्छत्। इयं ह्यस्त्रसिद्धेः पराकाष्ठा निगद्यते।

रामप्रयुक्तमस्त्रं नैव कथमपि वैयर्थ्यमभजत्। बालिवधप्रसङ्ग एकेनैव शर-सन्धानेन मण्डलाकारेण विद्यमानानां सप्तसंख्याकतालवृक्षाणां सहैव भेदनमपि तस्यास्त्रकौशलं स्फुटं व्यनक्ति।

शक्तिः—अस्यास्त्रस्य प्रयोगः क्रुद्धेन रावणेन लक्ष्मणमुद्दिश्य कृतः। तस्य च भीषणप्रहारेण लक्ष्मणः संज्ञाशून्य इव जातः। तथाहि—

ततो रावणवेगेन सुदूरमवगाढया।
शक्त्या विभिन्नहृदयः पपात भुवि लक्ष्मणः॥

द्वापरयुगे त्वस्त्रविद्यायाः परमो विकासः सञ्जातः। कौरव-पाण्डवाः परस्परं स्पर्धमानाः शस्त्रविद्याविशारदाद् द्रोणाचार्याद् विविधरणकलाचातुर्यमवाप्य विश्व-विदिता महारथा बभूवुः। लक्ष्यभेदस्य प्रक्रिया तादृशी सूक्ष्माऽभूत्, यया चलेऽपि लक्ष्ये शरसन्धानं सुकरमासीत्। विजयाभिलाषिणस्ते च वीरास्तपोभिर्देवानाराध्य तेभ्यो दिव्यास्त्राणि प्राप्तवन्तः, तेषां प्रयोगविधानं चावगतवन्तः। अर्जुनस्य गाण्डीवाख्यं धनुः, कर्णस्य कालपृष्ठकार्मुकम्, भीमसुयोधनयोर्गदा चेति प्रसिद्धा-न्यस्त्राणि स्वकीयाव्यर्थशक्तये प्रथितान्येव।

आग्नेयवारुणवायव्यास्त्राणि—महाभारतस्य समराङ्गणे वीरैरन्योन्यमेतेषामपि शस्त्राणां प्रयोगः क्रियते स्म। आग्नेयास्त्रप्रयोगकाले शस्त्रप्रयोक्ता मन्त्रद्वाराऽग्निदेव-मावाह्य शरं व्यसृजत्। फलतः समरभूमावग्नेर्वर्षणेन सम्पूर्णमपि युद्धक्षेत्रमग्निपूर्णमिव जायते स्म। तत्प्रतीकाराय च विपक्षी मन्त्रद्वारा वारुणास्त्रं प्रयुज्य मेघवर्षणद्वाराऽ-ग्नेयास्त्रवैफल्यं साधयति स्म। तस्यापि प्रभावस्य दूरीकरणाय वायव्यास्त्रस्य प्रयोगो भवति स्म। तस्य हि प्रयोगेण समस्तोऽपि मेघसमूहः प्रचण्डपवनवेगेन खण्डशो भूत्वा तिरोहितो भवति स्म। शरशय्याशायिनि पितामहे भीष्मे गङ्गोदकं कामयमाने पार्थप्रयुक्तेनैकेनैव शरेण तत्रैव सुरसरिद्धारा प्रवाहिता बभूवेति विदितमेवेतिवृत्त-विदाम्। लक्ष्यं विनाश्य प्रयोक्तुरन्तिके बाणपरावर्तनन्तु विलक्षणमस्त्रनैपुण्यमिति सर्वैरेव मनीषिभिरङ्गीक्रियते।

शब्दवेधिबाणः—अयं प्रयोगस्तु ततोऽपि वैलक्षण्यं बिभर्ति। अस्य बाणस्य प्रयोक्ता शब्दमात्रं निशम्य तदनुसारि शरसन्धानं करोति स्म। राज्ञा दशरथेन कमण्डलोः

शब्दं श्रुत्वा शब्दवेधिबाणेन मुनिकुमारः श्रवणो भ्रमाद्धतः। न केवलं त्रेतायां द्वापरे वास्य प्रयोगः, किन्तु कलावपि पृथिवीराजः शब्दवेधिशरसन्धानकर्मणि दीक्षित आसीत्। अनेन हि सन्धीयमाने शरे गोरीनामा यवनशासको यमपदं प्रापितः।

एवं हि पूर्वोक्तैः संक्षिप्तैः, किन्तु प्रामाणिकैर्विवेचनपरैर्वचोभिरस्त्रसिद्धि-विषये किमपि वस्तुतथ्यं गुणैकपक्षपातिनां विदुषां पुरस्तादुपस्थापयतो मे नितरां चकास्ति चेतः।

निष्कर्षतो विचारकोटौ द्वे सरणी समायातः—(१) अस्त्रसिद्धेराधारः प्रयोक्तु-रस्त्रविद्याकुशलता; (२) मन्त्राराधनद्वारा देवान् प्रसादयित्वा तेभ्य आयुधप्राप्तिः, तदावाहनद्वारा तत्प्रयोगश्चेति। शब्दवेधिबाणप्रयोगः प्रयोक्तुरस्त्रविद्याचातुर्यं प्रकट-यति। आग्नेयादीनां शस्त्राणां प्रयोगस्तु देवाराधनद्वारा प्रयोक्तुतपःसाधनं व्यनक्ति। अत्रेदं ज्ञातव्यमस्ति यदाग्नेयादीनि शस्त्राण्यपि साधारणशस्त्राण्येवासन्, केवलं तत्तद्देवान् मन्त्रैराहूय शरसन्धानमभूत्। एवं तस्य तस्यास्त्रस्य तत्तद्देवतानामपूर्वकं प्रचारः सञ्जातः।

अद्यतनेऽपि काले परमाणुराकेटक्षेप्यास्त्राणां निर्माणं युद्धस्य विनाशिरूपं सर्वथा स्मारयत्वेव; आवश्यकता ह्याविष्कारस्य जननी भवति। आविष्कारस्य परा परिणतिरेव प्रलय उच्यते। अस्त्रसिद्धेः परमविकासमये द्वापरे महाभारतयुद्धद्वारा लोकविनाशः प्रसिद्ध एव।

विकराले हि विज्ञानप्रधाने कलियुगे भगवानाशुतोषो मुहुर्मुहुः प्रार्थ्यते मया यदस्त्रनिर्माणपरेभ्यो वैज्ञानिकेभ्यो विमलां बुद्धिं वितनोतु, यया मानवतायाः सुरक्षा भवेदित्यलं विस्तरेण॥

# वेदेषु सिद्धिचमत्कारसूचकानि स्थलानि

श्रीत्रिभुवनलालः, एम० ए०, पीएच० डी०,

विविधस्वरूपाः सिद्धयः सन्ति, याभिर्लोकोऽयं विस्मयविमुग्धो भवति, चमत्कृतो भवति। कदाचिदेव काचित् सिद्धिः केनचिद् दृश्यते; अत एव श्रुतसिद्धिचमत्कार-विषये न सर्वे सर्वदा विश्वासवन्तः। अनेनैव कारणेन वेदपुराणोक्तसिद्धिचमत्कार-विषयेऽपि तेषामास्था न दृश्यते। तत्रातिरञ्जनातिशयोक्तिसद्भावेऽपि सिद्धिचमत्कार-निरूपणं नोपेक्षणीयम्; अपि त्वन्वेष्टव्यं विश्वसनीयं च वर्तते। सहजा—ओषधि-प्रभावोत्पन्ना, योगजा—विज्ञानोद्भूता, दैवानुग्रहप्राप्ता—गुरुप्रसादादवगतेत्यादयो बहुविधाः सिद्धयः सन्ति। परन्तु सिद्धीनां चमत्कारस्य प्रदर्शनेऽतिदृढाः प्रतिबन्धा विहिताः सन्ति। कारणं तु स्पष्टमेव, यच्चरमसिद्धेर्मुक्तेर्मार्गे ह्येतानि प्रदर्शनानि बाधकानि सन्ति। सत्यपि प्रतिबन्धे प्रयोजनवशात्, साधकशिष्यस्य चापल्यात्; अथवा भगवत्प्रेरणया कदाचित् सिद्धिचमत्कारः प्रदृश्यत एव। वेदेऽपि सिद्धि-चमत्काराणामुल्लेखाः सन्ति, येषां पुराणेषूपबृंहणमपि प्राप्यते। अत्रोदाहरण-रूपेणैव वेदप्राप्तानामुल्लेखानां किञ्चिद् विवरणं प्रदीयते।

वेदेऽश्विनोरनेकानि विस्मयजनककार्याण्यभिहितानि, केचिद् अत्र विविच्यन्ते। च्यवनर्षेः कथा पुराणेषु गीयते। ऋग्वेदेऽस्याः कथाया मूलं वर्तते—

जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।
प्रातिरतं जहितस्यायुर्दस्राऽऽदित्पतिमकृणुतं कनीनाम्॥
(ऋ० १-११६-१०)

युवं च्यवानमश्विना जरन्तं पुनर्युवानं चक्रथुः शचीभिः।
(ऋ० १-११७-१३)

भावोऽयमस्ति यदश्विनौ देवौ च्यवनर्षेर्वलितपलितयुक्तं चर्मादिकं तथैव पृथगकुरुताम्, यथा कश्चिद् वस्त्रं शरीरादपाकरोति। तं सर्वथा युवकं कृत्वा तस्यायु-रवर्धयताम्, अपि च तं कन्यानां पतिमकुरुताम्।

न केवलं च्यवनं युवानं कृतवन्तौ; अपि तु पितृगृह एव वृद्धा सञ्जाता पापरोगग्रस्ता घोषाऽपि रोगरहिता पतिपुत्रयुक्ता ताभ्यां कृताऽऽसीत्—

घोषायै चित् पितृषदे दुरोगे पतिं जूर्यन्त्या अश्विनावदत्तम्।
(ऋ० १-११७-७)

बृहद्देवतायां कथा एवं वर्तते—

आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिं वर्षाणि पितुरेव गृहे पुरा॥
आतस्थे महतीं चिन्तां न पुत्रो न पतिर्मम।
जरां प्राप्ता मुधा तस्मात् प्रपद्येऽहं शुभस्पती॥
यथैतौ मामकस्तात आराध्यावाप यौवनम्।
आयुरारोग्यमैश्वर्यं सर्वभूतहने विषम्॥
रूपवत्तां च सौभाग्यमहं तस्य सुता यदि।
ममापि मन्त्राः प्रादुः स्युर्यैः स्तोष्येतं ममाश्विनौ॥
चिन्तयन्तीति सूक्ते द्वे यो वां परिददर्श सा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम्॥
प्रविश्य विजरारोगां सुभगां चक्रतुश्च तौ।
भर्तारं ददतुस्तस्यै सुहस्तं च सुतं मुनिम्॥
(बृ० दे० ७४२-४७)

तयोरपरं परमाश्चर्यजनकं कार्यम् ऋग्वेदे निर्दिश्यते—

तद् वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिम्।
दध्यङ् ह मन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच॥
(ऋ० १-११६-१२)

ऋषिः कथयति—'हे विस्मयकार्यकारिपुरुषावश्विनौ, युवयोस्तदुग्रं कर्म लाभार्थं तथैव प्रकाशितं करोमि, यथा मेघो गर्जनादिशब्दैर्जलं प्रकाशयति। यां मधुविद्यां युवयोर्दध्यङ्आथर्वणोऽश्वस्य शिरसाऽकथयत्, तत्सम्बन्धि युवयोः कर्म प्रकाशयामि। अयमेवार्थोऽन्यर्चाऽप्युक्तम्—

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतम्।
स वां मधु प्रवोचदृतायन् त्वाष्ट्रं यद् दस्रावपि कक्ष्यं वाम्॥
(ऋ० १-११७-२२)

भावोऽयमस्ति यद् अश्विनौ दधीचे आथर्वणाय अश्वस्य शिरोऽनयताम्। तेन स सत्यपालनं कुर्वन्नश्विनौ त्वष्टृसम्बन्धिनीं मधुविद्यामुपदिष्टवान्। इयं कथा विस्तृतरूपेण शतपथब्राह्मणस्यान्तिमे काण्डे बृहदारण्यके त्वेवं वर्तते—

"दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं विदाञ्चकार। यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवति। स हेन्द्रेणोक्त आस एतं चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति। तदुहाश्विनोरनुश्रुतमास, दध्यङ् ह वा आथर्वण एतं शुक्रमेतं यज्ञं वेद यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते यथैष कृत्स्नो यज्ञो भवतीति। तौ हेत्योचतुः—उप त्वायावेति किमनुवक्ष्यमाणावित्येतं शुक्रमेतं यज्ञं यथा यथैतद्यज्ञस्य शिरः प्रतिधीयते तथैष कृत्स्नो यज्ञो भवतीति। स होवाच, इन्द्रेण वा उक्तोऽस्म्येतं चेदन्यस्मा अनुब्रूयास्तत एव ते शिरश्छिन्द्यामिति; तस्माद्वै बिभेमि यद्वै मे स शिरो न छिन्द्यान्न वामुपनेष्य इति। तौ होचतुः, आवां त्वा तस्मात् त्रास्यावहे इति; कथं मा त्रास्येथे इति; यदा ना उपनेष्यसेऽथ ते शिरश्छित्वान्यत्रापनिधास्यावोऽथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावस्तेन नावनुवक्ष्यसि स यदा नावनुवक्ष्यस्यथ ते तदिन्द्रः शिरश्छेत्स्यत्यथ ते स्वं शिर आहृत्य तत्ते प्रतिधास्याव इति; तथेति। तौ होपनिन्ये; तौ यदोपनिन्येऽथास्य शिरश्छित्वान्यत्रापनिदधतुरथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुस्तेन हाभ्यामनूवाच; स यदाभ्यामनूवाचाथास्य तदिन्द्रः शिरश्चिच्छेदाथास्य स्वं शिर आहृत्य तद्धास्य प्रतिदधतुः।"

(श. ब्रा. १४. १. १. १८-२४; बृ. आ. १. १. १८-२४)

सारांशोऽयमस्ति—दध्यङ् आथर्वणो मधुविद्यामधिगतवान्। इन्द्रस्तमकथयत्—यद्येनां विद्यां परस्मा उच्चारयिष्यसि, तर्हि शिरस्ते निपातयिष्यामि। अश्विनावागत्य तां विद्यामयाचताम्। इन्द्रभयनिराकरणार्थं ताभ्यामाथर्वणस्य स्वं शिरोऽन्यत्र निहितम्; तस्मा अश्वस्य शिरो दत्तं येन स तां विद्यामुवाच। इन्द्रेण तदाश्वशिरो-

विनिपाते ताभ्यामाथर्वणस्य स्वं शिरः पूर्ववत् स्थापितम्। बृहदारण्यकोपनिषदि सा मधुविद्याऽऽत्मविद्यारूपेणाभिहिता ( २. ५. १५-१९ )।

दिव्यश्रुतेरपि विवरणम् ऋग्वेदे ( ३.३३ ) प्राप्यते। विश्वामित्रस्य विपाशा-शुतुद्र्योश्च वार्तालापोऽतीव कवित्वपूर्णो निरूपितः। भरतानां पुरोहितो विश्वामित्रो-विपाशाशुतुद्र्योः संगमस्य पारं गन्तुं नद्यावयाचत्। इन्द्रसवितृप्रेरिते नद्यौ देवाज्ञया गृहीतप्रवाहकार्यतो विरन्तुं नैच्छताम्। ऋषिप्रणीतेषूक्थेषु ते स्वयशो निरूपितं द्रष्टुमैच्छताम्। ऋषिः पुनरपि स्वदूरागमनं निवेद्यायाचत्—

नि षू न मध्वं भवता सुपारा अधो अक्षाः सिन्धवः स्रोत्याभिः।
( ऋ. ३. ३३. ९ )

अन्ततोगत्वा नद्यौ स्वीकृतवत्यौ—

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते॥
( ऋ. ३. ३३. १० )

जन्मना सिद्धिरपि ऋग्वेदेऽभिहिता। ऋषिर्वामदेवो गौतमः कथयति—

गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा।
शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयम्॥
( ऋ. ४. २७. १ )

"गर्भस्थित एवाहं देवानां सर्वजन्मवृत्तान्तं ज्ञातवान्। शतायसपूर्वृतोऽपि श्येनवद् वेगेन बहिरागतोऽभवम्।"

छान्दोग्योपनिषदि ( १।१२ ) शुनां हिंकारगायनमुक्तम्। अन्यत्र ( छा. उ. ४. ५–८ ) ऋषभोऽग्निर्हंसो मद्गुश्चैते चत्वारो जाबालं सत्यकामं सम्बोध्य चतुष्कलस्य ब्रह्मणो व्याख्यानं कृतवन्त इत्याभणितम्। शापप्रभावादिकमपि निरूपितम्, परं त्विदमधिकमाश्चर्यजनकं प्रकथितम्—

"य उ हैवंविदा स्पर्धतेऽनुशुष्यत्यनुशुष्यैवान्ततो म्रियत इत्यध्यात्मम्"। ( बृ. उ., १. ५. २१. )। अन्यत्र याज्ञवल्क्येन सह विवादे शाकल्यस्य शिरोविनिपतनं सूचितम् ( बृ. उ., ३. ९. २६ )। एष त्वात्मज्ञानसम्पन्नस्य पुरुषस्य सिद्धिप्रदर्शकः, तेनाकृतघटितश्चमत्कारः। सिद्धात्मज्ञानिपुरुषस्य विषय इदमपि कथितम्—

"यद्यप्येतच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्शाखाः प्ररोहेयुः पलाशानीति ।"
( छा. उ. ५. २. ३. )

कठोपनिषदि नचिकेतसो यमलोकगमनम्, तत्र तस्य यमाद् वरप्राप्तिः, ज्ञानप्राप्तिः, पुनरिह लोके तस्यागमनं च निरूपितम्, केनोपनिषद्यद्भुतयक्षप्रादुर्भावो देवानामपि विमोहकः, किं पुनर्मनुष्याणाम् ?

वैदिकसाहित्ये सिद्धिचमत्कारविषये परिपूर्णो ग्रन्थस्त्वथर्ववेदः। तत्र बहुविधानामाश्चर्यजनककार्याणां करणाय मन्त्रा उद्दिष्टाः। हस्तस्पर्शेन रोगनिवारणाय मन्त्रा विहिताः ( ४-१३ ); विषनिवारणाय मन्त्रा दत्ताः ( ४. ७.; ७. ५६ ); दिव्यदृष्टिप्राप्तये मन्त्रा उक्ताः ( ४. २० ); सर्वविषनिराकरणाय मन्त्रा उद्दिष्टाः ( ५. १३; ६.१२; १०.४ ); घातकप्रयोगनिवर्तनायापि मन्त्रा दृष्टाः ( ५. १४; ५.३१ ); शापदातृविनाशायापि मन्त्रोल्लेखाः सन्ति (६.३७)। प्रतिसरमणिधारणादनेककार्यसिद्धिः कथिता ( ८.५ )। प्रतिसरमणिः वीरताप्रदाता, सपत्नहा, कृत्याविनाशकश्च कथितः (८.५)। सपत्ननाशको वरणमणिरप्युद्दिष्टः (१०.३)। मणिबन्धनात् कार्यसिद्धेरनेकोदाहरणानि दत्तानि (१०.६)। कृत्यानिवारणायान्यत्रापि मन्त्रा दत्ताः (१०.१)।

अथर्ववेदस्यैकादशकाण्डे चतुर्थसूक्ते प्राणविद्याऽथवा प्राणायामविद्या समहत्त्वं गीता। दशमकाण्डेऽथर्वणः प्राणसाधना ससिद्धिरुक्ता—

मूर्धानमस्य संसीव्याथर्वा हृदयं च यत्।
मस्तिष्कादूर्ध्वः प्रेरयत् पवमानोऽधिशीर्षतः ॥
तद्वा अथर्वणः शिरो देवकोशः समुब्जितः।
तत्प्राणो अभि रक्षति शिरो अन्नमथो मनः ॥
यो वै तां ब्रह्मणो वेदामृतेनावृतां पुरम्।
तस्मै ब्रह्म च ब्राह्माश्च चक्षुः प्राणं प्रजां ददुः ॥
( अ. वे. १०।२।२६, २७, २९ )

सारांशोऽयमस्ति—अथर्वा स्वमूर्धानं हृदयेन सह संसीव्य स्वप्राणं शिरसो मस्तिष्कादुपरि प्रेषितवान्। एतदेवाथर्वणः शिरो देवानां कोशरूपेण कथितम्। य एताममृतेनावृतां ब्रह्मणः पुरं साधनया जानाति, स सिद्धो भवितुमर्हति ॥

---

# पुराणगोष्ठीफलश्रुतिः

## श्रीऔदवाहिः

वाराणसेयसंस्कृतविश्वविद्यालये सितम्बरमासस्य प्रथमदिनाङ्कतो दिनत्रयं यावदखिलभारतीयपुराणगोष्ठ्याः समायोजनं समभूत्। विश्वविद्यालयकुलपतीनाम्, उत्तरप्रदेशराज्यपालानां महामहिमश्रीविश्वनाथदासमहोदयानां सत्प्रेरणया पुण्यकार्यमिदं सुसम्पन्नम्। आयोजनेऽस्मिन् भारतस्य विभिन्नभागतः प्रायः शतसङ्ख्याका विद्वांसः समामन्त्रिता आसन्। मद्रास-तिरुपति-मैसूर-पूना-बड़ौदा-उज्जयिनी-दिल्ली-अलीगढ़-इटावा-लखनऊ-कलकत्ता-नवद्वीपप्रभृतिनगरेभ्यः प्रायः त्रिंशत् प्रतिनिधयः सम्मिलिताः। एभिः प्रतिनिधिभिः स्थानीयैश्च विद्वद्भिः संभूय गोष्ठ्यां विचारार्थं प्रायः चत्वारिंशद् निबन्धाः सम्प्रेषिताः। तेषु बहवः पठिता विचारिताश्च। गोष्ठ्याः सञ्चालनं संस्कृतभाषया समभूत्।

पुराणगोष्ठ्या मुख्यो विचारणीयो विषयः पुराणप्रतिपाद्याः सिद्धय आसीत्। विचारसौकर्याय च तास्त्रिधा विभाजिताः—क्रियात्मकसिद्धयः, रचनात्मकसिद्धयः, इच्छात्मकसिद्धयश्च। गोष्ठ्याः शुभारम्भः पूज्यश्रीकरपात्रिस्वामिभिः कृतः। वाराणसेयसंस्कृतविश्वविद्यालयस्य मुख्यभवने गोष्ठीयं समायोजिता।

### प्रथमदिवसवृत्तम्

वैदिकपौराणिकमङ्गलाचरणः सितम्बरमासस्य प्रथमदिने प्रातः सार्धदशवादनसमये गोष्ठी समारब्धा। आदौ पुराणगोष्ठ्या उद्देश्यं निरूपयद्भिरनुसन्धानसञ्चालकैः श्रीबलदेवोपाध्यायैरुक्तम्—

'भारतीयवाङ्मयस्य धर्मस्य च मूलं वेद एव, परं वेदस्यार्थो दुरधिगमः। अतो वेदस्य यथार्थं तात्पर्यमवगन्तुं पुराणेतिहासौ समाश्रयणीयौ भवतः। योगशास्त्रोक्ताः सिद्धयोऽपि पुराणेषु प्रतिपादिताः। एतासां सिद्धीनां विषये नैके प्रश्नाः प्रादुर्भवन्ति—कथमेताः साध्याः, तदुपलब्धिसाधनानि च कानि? इत्यादयः। एतेषां

समाधानं विद्वद्भिः करणीयम्। पुराणेषु विषया इमे सविस्तरं चर्चिताः।' उपाध्यायैर्नैकासां विद्यानां ( स्वेच्छारूपधारिणी विद्या, सर्वभूतरुतज्ञानविद्या; अनुलेपनविद्या, यामाश्रित्य पादतले क्रियाविशेषकरणेन मानवः स्वल्पेनैव कालेन दीर्घतरमध्वानमतिक्रामति; उल्लापनविद्या, यामाश्रित्य वक्रं वस्तु सरलं विधीयते ) सविस्तरं विवरणं कुर्वद्भिरुक्तं यत् 'साम्प्रतिकस्थित्यनुरूपं विद्वद्भिरत्र विचारणीयं यदेताः कथमासादनीयाः ?' इति।

ततः परं विश्वविद्यालयोपकुलपतिभिः श्रीसुरतिनारायणमणित्रिपाठिमहोदयैः स्वीये स्वागतभाषणे उक्तम्—'भारतीयसंस्कृतेर्विद्यानाञ्च ज्ञानाय पुराणं विश्वकोषो नाम।' विदुषः सम्बोध्य तैः सूचितं यदत्र के के विषया विद्वद्भिर्विवेचनीया इति। पातञ्जलदर्शनं सर्वविधधर्मसम्प्रदायांश्च समाश्रित्य सिद्धिस्वरूपं निरूपयद्भिस्तैरुक्तं यद्विषयेऽत्राधुनिकदृष्ट्याऽपि विचारः प्रचलत्विति।

ततः परं कुलपतिभिः श्रीविश्वनाथदासमहोदयैः सम्मेलनस्योद्घाटनं कृतम्।

स्वीयेऽध्यक्षीये भाषणे पूज्यश्रीकरपात्रिस्वामिभिरुक्तम्—

'विभिन्नपुराणेषु समुल्लिखिताः सिद्धयः सत्सङ्कल्पेनैव प्रभवाः। यदा मनुष्यस्य चेतसि सत्त्वोत्कर्षेण सत्सङ्कल्पः समुदेति, तदैवैताः सिद्धयो लभ्यन्ते। सत्त्वोत्कर्षाय च सदाचारः, सद्ग्रन्थानामध्ययनम्, सत्सङ्गः, परोपकारादयः समपेक्षिताः।' सांख्ययोगवेदान्तदर्शनानुसारं सिद्धीर्विवेचयद्भिस्तैरुक्तं यत् 'अलौकिकशक्तय एव सिद्धयः। निरावरणचित्तेनैवैताः समासाद्यन्ते। शास्त्रविश्वासाय सिद्धीनां समर्जनं प्रजासु तत्प्रदर्शनञ्च परमावश्यकम्' इति।

सितम्बरमासस्य प्रथमदिनाङ्केऽपराह्णे सार्धत्रिवादनसमये दिल्लीनिवासिनां विद्यावयोवृद्धानां श्रीदीनानाथशास्त्रिसारस्वतानामाध्यक्ष्ये क्रियात्मकसिद्धिपरिषदः कार्यं समारब्धम्। अत्र स्तम्भनविद्या, आकाशगमनविद्या, कायसिद्धिः, कायव्यूहः, परशरीरप्रवेश एवमादिविषयेषु सर्वश्रीबदरीनाथशुक्लैः ( काशी ), पण्डितमाधवाचार्यैः ( मैसूर ), श्रीकृष्णमणित्रिपाठिभिः ( काशी ), रामनारायणदत्तपाण्डेयैः ( काशी ), केशवदेवपाण्डेयैः ( मथुरा ), वेङ्कटनारायणशास्त्रिभिः (मद्रास) च निबन्धाः पठिता भाषणानि च कृतानि।

परिषत्कार्यमुपसंहरता अध्यक्षमहोदयेनेदं सप्रमाणं साधितं यत् सिद्धयो नालीकाः; अद्यापि यत्र कुत्रचन ताः परिदृश्यन्ते। पुराणेषु बहवो विषया विस्मयावहाः प्रतीयन्ते, किन्तु तद्रहस्यस्य गभीरे तले प्रविश्य ते साक्षात्करणीयाः। अवसरेऽस्मिन् तैः क्रियासिद्धिविषयमाश्रित्य महत्त्वपूर्णो निबन्धश्च पठितः।

## द्वितीयदिवसवृत्तम्

सितम्बरमासस्य द्वितीयदिनाङ्के काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयाध्यक्षाणां श्रीरामचन्द्रशास्त्रिणां साभापत्ये ज्ञानात्मकसिद्धिपरिषदः कार्यं समारब्धम्। सर्वश्रीदीनानाथशास्त्रिसारस्वतैः ( दिल्ली ), रामकुबेरमालवीयैः ( वाराणसी ), रामसुरेशत्रिपाठिभिः ( अलीगढ़ ), वे०वेङ्कटाचलन्शास्त्रिभिः ( उज्जैन ), वे० वरदाचारिभिः ( तिरुपति ), प्राध्यापकैः श्रीअरुणदेवजानीमहोदयैः ( बड़ौदा ), अन्यैश्च विद्वद्भिर्निबन्धाः पठिताः शास्त्रचर्चाश्च चर्चिताः।

अवसरेऽस्मिन् विश्वविद्यालयकुलपतिभिः श्रीविश्वनाथदासमहोदयैरुक्तं यत् पाश्चात्त्यसंस्कृतिसभ्यताभ्यामस्माभिर्द्रढीयान् सङ्घर्षः करणीय आस्ते। अस्मत्पूर्वजैः काऽप्येतादृशी विद्या नासंस्पृष्टा यद्विषये मूलतः प्रयासः समपेक्ष्यते। सम्प्रति देशस्यास्य सा प्राच्या संस्कृतिः क्रमशो विलुप्यते। एवंस्थितौ तत्रभवतो केवलं ग्रन्थपाण्डित्यप्रकटनेन न कार्तार्थ्यम्; विषयेऽस्मिन्ननुसन्धानमपि परमावश्यकम्। प्रायोगिकाध्ययनेन धारणेयं निरसनीया यत्प्राचीना विद्या व्यर्था इति। व्यक्तिशोऽहं शासनञ्च सततं सचेष्टं यद् भारतीयसंस्कृतिः सुरक्षिता स्यात्। अग्रिमपञ्चवर्षीययोजनायां प्राचीनविद्यानां पुनरुद्धाराय पञ्चविंशतिकोटिमितो धनराशिः स्वीक्रियेत, एतदर्थमहं शासनं विश्वविद्यालयानुदानायोगञ्चानुरुद्धन्नस्मि। आवश्यकमिदं यत्तत्रभवद्भिर्निर्देष्टव्यं यत् काः काः प्राचीना विद्या उन्नेया इति। सन्दिह्यतेऽद्य यत् शास्त्रोक्ता विषयाः कपोलकल्पिताः सत्या वेति। येऽत्र विश्वसन्ति, तेषां कथैव नहि; किन्तु ये सन्दिहानास्तेषु विषयेऽत्र विश्वासजननं तत्रभवतां परं कर्तव्यम्। एतादृशा जिज्ञासवो निर्मेया ये किल विषयानेतान् समन्विष्य लोकानां पुरतः स्थापयेयुरिति।

वर्षाविज्ञानविषये तत्रभवद्भी राज्यपालैरुक्तं यत् 'प्राचीनशास्त्रेषु विषयेऽत्र बहु समुल्लिखितमस्ति। अद्यास्माभिः ऋतुविज्ञानविषये लक्षरूप्यकाणि व्ययी-

क्रियन्ते, किन्त्वेतन्न प्रयत्यते यत्प्राचीनग्रन्थेषु वर्षाकृत्रिमवर्षादिविषये समुल्लिखितं विवरणं तात्त्विकमतात्त्विकं वेति । महान् प्रमोदावसरोऽयं यदनया गोष्ठ्या अखिलभारतीयविदुषां प्रयत्नैः पुराणगतसिद्धिविषयिणी प्रभूता सामग्री सङ्कलिता' इति ।

सितम्बरमासस्य द्वितीये दिनाङ्केऽपराह्ने चतुर्वादनतः श्रीरामचन्द्रशास्त्रिणामाध्यक्ष्ये ज्ञानात्मकसिद्धिपरिषदो द्वितीयमधिवेशनं प्रारब्धम् । अत्र दिव्यश्रुति-दिव्यदृष्टिप्रातिभज्ञानादिविषयेषु सर्वश्रीरघुनाथशर्मणाम् (काशी), विनायकपरांजपेशास्त्रिणाम् ( पूना ), अन्येषां च निबन्धाः पठिताश्चर्चिताश्च ।

अध्यक्षमहोदयैरुपसंहारे योगपुराणेषु वर्णितानां विविधसिद्धीनां सविस्तरं वर्णनं विधायोक्तं यत् 'अद्यापि मन्त्रैर्देवोपासनामुखेन नैकाः सिद्धयः समुपलब्धा दृश्यन्ते'। स्वानुभूतस्यैतादृशस्य घटनाचतुष्टयस्य समुल्लेखं कुर्वाणैस्तैरुक्तं यत् 'केवलं शास्त्रचर्चया सिद्धिर्न लभ्यते; मन्त्राराधनेन सहैव यमनियमानां निश्छलं पालनमपि न्यूनातिन्यूनमत्र परमावश्यकम्' इति ।

## तृतीयदिवसवृत्तम्

सितम्बरमासस्य तृतीये दिनाङ्के प्रातः सार्धदशवादनतो वाराणसेयसंस्कृतविश्वविद्यालयीयभूतपूर्वपुराणेतिहासविभागाध्यक्षाणां श्रीअनन्तशास्त्रिफडकेमहोदयानामाध्यक्ष्ये इच्छात्मकसिद्धिपरिषदोऽधिवेशनं समारब्धम् । डाक्टरभीखनलाल-आत्रेयमहोदयैर्यूरोपयात्रानुभवं निरूपयद्भिरुक्तं यदद्य पाश्चात्त्यदेशेषु भारतीययोगशास्त्रं परया श्रद्धानिष्ठया अधीयते । योगोक्तसिद्धीरधिगन्तुं ते निष्ठाविश्वासाभ्यां दृढं संलग्ना दृश्यन्ते । योगशास्त्रीय'विभूति'विषयमाश्रित्य सम्प्रति 'पैरासाइकोलाजी' इति संज्ञके मनोविज्ञानशाखाविशेषे विचाराः प्रयोगाश्च तैः साभिलाषैर्विधीयन्ते । 'साइकिकल रिसर्च सोसाइटी'पत्रिकायां विषयेऽत्र प्रभूतं चर्च्यते । अधिवेशनेऽस्मिन् इच्छासिद्धिः, विभूतिसमुत्पत्तिः, औषधसिद्धिः, सञ्जीवनीविद्या, अस्त्रनिर्माणम्, एवमादिविषयेषु सर्वश्रीरामकुबेरमालवीयानाम्, रामप्रसादत्रिपाठिनाम्, आशुतोषभट्टाचार्याणाम्, डाक्टररामशङ्करभट्टाचार्याणाम्, मुनीश्वरत्रिपाठिनामन्येषाञ्च विदुषां निबन्धपाठा विचारचर्चाश्च समभूवन् ।

अपराह्णे चतुर्वादनतः परिषदोऽस्या द्वितीयमधिवेशनं फडकेशास्त्रिणां साभापत्ये प्रारब्धम् । अत्र शापोऽनुग्रहश्च, स्तम्भनविद्या, अशनपानादिसिद्धय एवमादिविषयेषु सर्वश्रीकालिकाप्रसादशुक्लानाम्, आनन्दस्वरूपगुप्तानाम्, कपिलदेवत्रिपाठिनाम्, गोमतीप्रसादमिश्राणाम्, व्रजवल्लभद्विवेदिनाम्, सुरेन्द्रसावर्णिमहोदयानामन्येषां च निबन्धपाठा विचारचर्चाश्चाभूवन् ।

ततः परं बडौदानिवासिभिः श्रीअरुणदेवजानीमहोदयैः समागतप्रतिनिधीनां प्रातिनिध्येन गोष्ठीसंयोजकेभ्य आभाराः प्रदत्ताः ।

उपसंहारभाषणे गोष्ठीसंयोजकैः श्रीबलदेवोपाध्यायैः सस्वागतं दिनत्रयोपलब्धीनां चर्चा कृता । तैरुक्तम्—'प्राचीनभारते सिद्धीनां सत्ताविषये न केवलं पुराणान्येव समुद्बोधकानि, ततोऽपि प्राचीनेषु वेदसम्बन्धिषु ऋग्विधानम्, सामविधानम्, यजुर्विधानम्, कौशिकसूत्रम्—एवमादिग्रन्थेष्वपि सिद्धीनां विषये वैदिकानुष्ठानानां पर्याप्तं वर्णनं समुपलभ्यते । अन्येष्वपि ग्रन्थेषु सिद्धिप्रक्रियाः सविस्तरं विवेचिताः । मार्कण्डेयपुराणोक्ताया अनुलेपनविद्यायाः साधनानां वर्णनं कौटिलीयेऽर्थशास्त्रे समुपलभ्यते । सुप्रसिद्धसञ्जीवनीमन्त्रानुष्ठानविधानञ्च तन्त्रग्रन्थेषु बहुशो वर्णितम् । गोष्ठ्यारम्भे सिद्धिविषयकं प्रश्नचतुष्टयं मया विदुषां पुरस्तात् समुपस्थापितमासीत् । सन्तोषस्यावसरो यच्चत्वारोऽपि प्रश्ना अत्र समुत्तरिताः । इतः परं सिद्धिविषयेऽलं शास्त्रीयशाब्दिकचर्चया । प्राचीनयोगमनोविज्ञानाभ्यां तासां प्रायोगिकमध्ययनमितः परं भाव्यम् । शास्त्रोक्तासु सिद्धिषु जनसाधारणस्य विश्वासजननायेदं नितान्तमावश्यकम्' ।

अन्तेऽध्यक्षपदेन श्रीफडकेशास्त्रिभिः पुराणानां महत्त्वं प्रतिपादयद्भिः सिद्धयश्चर्चिताः । दिनत्रयसम्पन्नाया गोष्ठ्याः सिंहावलोकनमाचरद्भिस्तैः समागतविदुषां विचाराणां निष्कर्षः समुपस्थापितः, गोष्ठीसंयोजकाश्च भूयो भूयोऽभिनन्दिताः । इत्थं विषयस्यास्य प्रथमा गोष्ठी बह्वंशैः पूर्णतः सफला वक्तुं शक्या ।

पातञ्जलयोगशास्त्रे सिद्धीनां पञ्चप्रकाराः प्रकीर्तिताः । तासु जन्मजसिद्धिविषये मानवीययत्नो नापेक्ष्यते । तपःसमाधिजसिद्धी च जनसाधारणानुपयोगिन्यौ । मन्त्रौषधिजाः सिद्धयः पुनर्जनसाधारणोपयोगिन्यः । नैकासामद्भुततमानां सिद्धीनां कृते ओषधीनां प्रयोगास्तन्त्रे आयुर्वेदे च वर्णिताः । एवमेव आसनप्राणायामादे-

रभ्यासेनापि रोगनिवृत्तिर्विविधकार्यसिद्धयश्च सम्भवन्ति। वाराणसेयसंस्कृत-विश्वविद्यालये योगतन्त्रविभाग आयुर्वेदविभागश्चाचिरात् संस्थापित एव। अत्र विषयाणामेतेषां प्रायोगिकेणाध्ययनेन भाव्यम्।

राज्यपालमहोदयैर्ऋतुविज्ञानवर्षाविज्ञानयोश्च चर्चा कृता। एवमेव भारतीयशिल्पशास्त्रं स्थापत्यकला चापि विलुप्ते। भारतस्य वास्तुनिर्माणमद्य आधुनिक-स्थापत्यकलानुसारं जायते। भवनानि सेतवो नदीघट्टा वा दृश्यन्ताम्, सर्वमिदं नवनिर्माणं शीघ्रमेव क्षतिग्रस्तं नष्टं वा भवन् विलोक्यते। तेषां तुलनायां भारतीयां प्राच्यां स्थापत्यकलां पश्यन्तु। शतशो वर्षैर्निर्मितानि मन्दिराणि सेतवो घट्टाश्च अद्यापि तथैव शोभया विलसन्तो दरीदृश्यन्ते, यथा निर्माणसमये आसन्। साँचीस्तूपानाम्, अजन्ताभित्तिचित्रवर्णानाम्, अशोकस्तम्भानां लोहस्तम्भानां विद्योतमाना आभा च स्वीयमैश्वर्यमद्यापि सगर्वमभिव्यनक्ति। भारतीयविज्ञानम्, शिल्पशास्त्रम्, चिकित्सापद्धतिश्च मानवाय चिरस्थायिनीं सिद्धिं प्रददाति, यत् समुन्नतस्य साम्प्रतिकस्य विज्ञानस्य कृतेऽद्याप्यसम्भवप्रायमास्ते। भारतीयसंस्कृते-र्विस्मृतिगर्भे स्थितानामेतेषामध्ययनाध्यापनं परमावश्यकम्॥

---

# शुभाशंसनानि

वाराणसेयसंस्कृतविश्वविद्यालये काचित् पुराणगोष्ठी समायोजिता। कैश्चन विद्वद्भिः पुराणं योगसिद्धिं चाश्रित्य बहूनि शुभाशंसनादिकानि प्रेषितानि, येषां सारसंग्रह इह क्रियते—

म०म० पण्डितगोपीनाथकविराजमहाभागा मन्यन्ते यत् सिद्धयो जन्मौषधितपःसमाध्यादिभेदेन बहुविधाः। ताश्च व्युत्थानावसरे एव सिद्धपदवाच्याः, कैवल्यस्य तु ता अन्तराया एव। भगवतो बुद्धस्यापीदमेव मतम्। शङ्कराचार्येण तच्छिष्येण सुरेश्वराचार्येण च सिद्धीनां महत्ता प्रख्यापिता। आगमेष्वपि सिद्धिचर्चा पुष्कला दृश्यते। संयमसाध्या विभूतयो लौकिकदृष्ट्या कथञ्चिदुपादेया अपि भवन्ति। ऋषिभिः सिद्धैः क्वचित् तासां प्रदर्शनमपि कृतम्। तपआदिभिर्जाताः सिद्धयः परोपकृतये यदि प्रयुक्ताः स्युस्तर्हि लोककल्याणं स्यादेव।

राजेश्वरशास्त्रिद्रविडमहाभागो वक्ति यत् प्रमाणैरिदं निश्चितं यद् मन्त्रसिद्धयो भवन्त्येव, यद्यप्यधार्मिके राजनि प्रजासु सिद्धयो नाविर्भवन्ति। बहुविधाश्च सिद्धय इति पतञ्जलिराह। अद्य यद्यपि सिद्धिविषये बहवो जनाः संशयं प्रकटयन्ति; तथापि मेस्मरिज्म-प्रभृतिक्रियाभिरप्यलौकिकज्ञानबलसत्ता सिध्यति। मन्त्रसिद्धिविषये परशुरामकल्पसूत्रव्याख्याने सुष्ठु विचारितम्। विभूतिरहस्यं शास्त्रगम्यम्, अत इदं न कुतर्कैर्दूषणीयमिति।

भैरवानन्दपरमहंस इत्थमवोचत्—अतिप्राचीने काले सिद्धय आविर्भवन्ति स्म, अतो नेमाः काल्पनिक्यः। साधनानुष्ठानेनाद्यापि सिद्धयो जायन्ते। स्थूलाः सिद्धयः क्वचिद् दृश्यन्तेऽपि। यतो ह्यद्य शास्त्रवचनमाश्रित्यैव ( न गुरुमुखतः ) साधनान्यनुष्ठीयन्ते, अतः सिद्धिलाभः प्रायेण न भवति योगिषु। यच्चानुष्ठानं प्राचीनैः साधकैः कृतं तस्य कृत्स्नशो ज्ञानमप्यद्य न भवितुमर्हतीति।

एवं सत्यप्यद्यापि यथोचितसाधनैः सिद्धयः संपादयितुं शक्यन्ते। प्राणायामादिभिः स्वनुष्ठितैर्यथायथं सिद्धयः प्रादुर्भवन्त्येव। षट्चक्रजयेनापि सिद्धिलाभो भवति।

अत्रेदं विज्ञेयं यद् विभूतेरपप्रयोगो न कर्तव्यः। करणे प्रत्यवायो भवति लोकहानिश्च। मन्त्रजाः सिद्धयोऽद्य सुखेन साधयितुं शक्यन्ते।

क्रियात्मिकाः सिद्धयश्च निरुत्तरतन्त्रोक्तिसाधनैरधिगन्तुं शक्यन्ते। स्तम्भनादयः सिद्धयः खल्वस्याः सिद्धेरुदाहरणानि। ज्ञानात्मिकाः सिद्धयो विवृताः, विशेषतः पातञ्जले योगशास्त्रे। सूक्ष्मव्यवहितज्ञानादयोऽस्याः सिद्धेरुदाहरणानि। इच्छात्मिकाः सिद्धयो बाहुल्येन मन्त्रजाः, शापानुग्रहप्रभावादयोऽस्याः सिद्धेरुदाहरणानि।

बहवो विद्वांसः केनापि हेतुनाऽत्रोपस्थातुमशक्ताः सन्तः स्ववाणीं पत्रद्वारा प्रेषयामासुः,। यथा—राजस्थानराज्यपालाःश्रीसम्पूर्णानन्दमहोदयाः, श्रीनथमलदाधीचाः कौलाचार्याः। श्री वी० आर० शर्माणः तिरुपतिस्थकेन्द्रीयसंस्कृतविद्यापीठाध्यक्षाः, श्रीउमेशमिश्रा गङ्गानाथझा—अनुसन्धानसंस्थानसचिवाः, श्रीरामजीउपाध्यायाः सागरविश्वविद्यालयीयसंस्कृतविभागाध्यक्षाः, श्रीजटाशंकरझाः पाटलिपुत्रराजकीयसंस्कृतमहाविद्यालयप्राचार्या अन्ये चेति॥



## ग्रन्थसमालोचनम्

मुकुन्दकोषस्थलिङ्गानुशासनवर्गः। प्रणेता—श्रीमुकुन्दशर्मा, मूल्यम्—१२), प्रकाशनकालः १९६३; प्राप्तिस्थानम्—मुकुन्दाश्रम, ज्योतिस्तत्त्वकार्यालय, पोस्ट आफिस् अपोल, गढवाल, उत्तरप्रदेश।

श्रीमुकुन्दशर्मप्रणीतः 'लिङ्गानुशासनवर्गः' मयाऽऽदित आरभ्यान्तं यावद् महता प्रणिधानेन पर्यालोचि। ग्रन्थस्यास्य पर्यालोचनेन स्फुटं प्रतीयते यल्लेखकः सम्यक् परिश्रम्याद्यत्वे समुपलब्धान् प्रायः सर्वान् कोशान् निपुणं निभाल्य विशाल-वपुषं कोशममुं सुरगवीसमुपासकानां करकुशेशयेषु समर्पितवान्। यद्यप्यनेके कोशाः सम्प्रति समुपलभ्यन्ते, तेषु सत्सु कोशस्यास्य नासीत् काचिदप्यावश्यकता; तथाप्य-मरविश्वकोशादयोऽतीव संक्षिप्ताः काव्यादिषु प्रयुक्तान् सर्वान् शब्दान् प्रतिपाद-यितुमक्षमाः, ये च विशालकायाः शब्दकल्पद्रुमादयस्तेऽपि वर्गक्रमेणाप्रणीताः शब्दा-वगमाय न सरलपथा इति वर्गक्रमवतो विपुलशब्दराशेः छन्दोबद्धस्य कस्यचन कोषस्यातीवावश्यकताऽऽसीत्। सा चानेन मुकुन्दकोषेण पूर्तिं प्राप्स्यति।

विशालकायस्य कोषस्यास्य पर्यायभागोऽनेकार्थभागश्चेति भागद्वयं स्वसत्ता-मादधाति। पर्यायभागश्च पञ्चोत्तरशतवर्गैर्विभक्तोऽस्ति, अनेकार्थभागश्च वैद्यका-नेकार्थवर्गेण साहित्यानेकार्थवर्गेण च द्वाभ्यां विभक्तोऽस्ति।

अस्मिन् पञ्चाधिकशततमे लिङ्गानुशासनवर्गे ग्रन्थकृता प्रायः सर्वा अपि लिङ्गविषयिकाः समस्या मर्मस्पर्शिभिर्मनोरमपद्यैः सम्प्रति प्रायो विलुप्तपद्धतिभिः समाहिताः। स्वरचितायां विमलाख्यायां व्याख्यायामन्येषां हेमचन्द्राचार्यादीनां कोशकाराणां लिङ्गानुशासनान्यपि सोदाहरणानि व्याख्यातानीत्यपरमप्यनुकूलम्। इत्थं लिङ्गानुशासनविषयकसकलसामग्रीसम्भृतोऽयं मुकुन्दकोषः संस्कृतसमाजं सम्यगुपकरिष्यतीति मे दृढो विश्वासः।

अन्ते ग्रन्थकर्तारं संख्यातीतैः साधुवादैः सभाजयन् भृशमनुरुणध्मि यदव-शिष्टमपि भागमह्नाय प्रकाश्य संस्कृतसमाजमुपकुर्यात्।

अस्मिन्नेवावसरे भारतशासनाधिकारिणोऽनेकैर्धन्यवादैः संयुज्यन्ते यत् ते ग्रन्थस्यास्य प्रकाशनाय साहाय्यं प्रदत्तवन्तः। यदि ते तथा नाकरिष्यन् तदा ग्रन्थ-स्यास्य गुणैर्वञ्चितोऽभविष्यत् संस्कृतलोकः।

श्रीकालिकाप्रसादशुक्लः।

कृदन्तरूपमाला ( प्रथमो भागः ) [ धातुसाधितशब्दसूची ]

ग्रन्थकारः—पण्डितश०रामसुब्रह्मण्यशास्त्री, प्रकाशकः—मद्रपुरीसंस्कृतविद्यासमिति-सचिवः, श्री०ति०वे० विश्वनाथाचार्यः, ( १४, पूर्वमाडवीथी, मद्रास—४ ) १९६५ ई० मूल्यम्—१०.००।

महामुनिपाणिनिप्रणीते धातुपाठे सन्ति सहस्रद्वयप्राया धातवः। तांश्च समग्रधातूनाधृत्य श्रीश०रामसुब्रह्मण्यशास्त्रिमहोदयैरनूनकानां साधितकृदन्तरूपाणां सूची समुपस्थापितेति भृशमुपकृता व्याकरणादिशास्त्रमधीयाना विद्यार्थिनः।

बहोः कालात् पूर्वं प्रकाशिता एवञ्जातीयकाश्चत्वारो ग्रन्था मद्दृष्टिपथमुपेताः। १. रामतारणशिरोमणिविरचितो गणदर्पणः, कालिकातातः ( १९२० ई० षष्ठसंस्करणात्मकः ) प्रकाशितः। तत्र सन्नन्त-यङन्त-यङ्लुगन्तेभ्यः कृत्प्रत्ययविधानमन्तरा सर्वं सुसिद्धम्। २. कविभूषणपूर्णचन्द्रदेकाव्यरत्नोद्भटसागरप्रणीतो धातुरूपसागरः ( १९२५ खीस्ताब्दे कालिकातातः ) प्रकाशितः। इह ग्रन्थे संक्षेपतः समेषां कृदन्तशब्दानामस्ति सन्निवेशः। यद्यप्यस्य ग्रन्थस्य सरणिर्मह्यं भृशमरोचत; तथापि नेह समे धातवः कृत्यप्रत्ययाश्च संनिविष्टा इति विद्यार्थिनां तथा नोपकारमावहति यथा कृदन्तरूपमाला। ३. गुरुनाथविद्यानिधिसंदृब्धो धातुरूपकल्पद्रुमः ( १९२९ खीस्ताब्दे कालिकातातः ) प्रकाशितः, तिङ्कृत्तद्धितप्रत्ययसाधितप्रयोगसंवलितः। चतुर्थश्च तारानाथतर्कवाचस्पतिभट्टाचार्यकल्पितो धातुरूपादर्शः ( १९३६ खीस्ताब्दे ) प्रकाशितः, कृदन्तरूपाणि प्रस्तौति। एते चत्वारो ग्रन्थाः प्रामुख्यतस्तिङन्तरूपप्रायाः, कृदन्तरूपाणि तु प्रसङ्गतो दर्शयन्ति। चत्वार एव जातास्तदानीं लोकप्रिया इति तेषां षष्ठसंस्करणेन प्रतीयते।

प्रकृतो ग्रन्थः 'कृदन्तरूपमाला' कृदन्तरूपाणां विशदसूचीसमन्वितः, अपेक्षितस्थलेषु व्याकरणविषयकटिप्पणीभिर्जातो महिमभूयिष्ठः। कचित् कचिट्टिप्पणीषु प्रयोगोदाहरणान्यपि समुपन्यस्तानि ग्रन्थोपयोगं विशिंषन्ति।

धातवो द्विविधाः—औपदेशिका आतिदेशिकाश्चेति। धातुपाठे महामुनिना पाणिनिना साक्षात् पठिता औपदेशिकाः। 'सनाद्यन्ता धातवः' ( ३।१।३२ ) इति सूत्रबोधितधातुसंज्ञकाः—'सन्-क्यच्-काम्यच्-क्यङ्-क्यषोऽथाचारक्विप्-णिज्यङौ तथा।

यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥' इत्युक्ताः सनादिप्रत्ययान्ता द्वादश खल्वातिदेशिकाः। तेषु णिच्-सन्-यङन्तास्त्रय एवास्मिन् ग्रन्थे 'कृदन्तरूपमालायाम्' कृत्प्रत्ययप्रकृतित्वेनोपात्ताः। यद्यपि क्यजाद्यन्तेभ्योऽपि धातुभ्य एते साधारणाः कृत्प्रत्यया भवितुमर्हन्ति, यथा—पुत्रीयकः, पुत्रीयिता, पुत्रकाम्यकः, पुत्रकाम्या—इति; तथापि क्यजादीनां सुबन्तप्रातिपदिकप्रकृतिकत्वेन तेषामानन्त्यात्, तेभ्यः कृत्प्रत्यय-निदर्शनं दुस्साधमिति मनसिकृत्य ग्रन्थकारेण परित्यक्तम्। यङ्लुकस्तु केषाञ्चिन्मते छान्दसत्वात् तदन्तेभ्योऽपि कृत्प्रत्यया इह ग्रन्थे न प्रदर्शिताः।

ग्रन्थकार उपसर्गबलेन 'धातूनां नानार्थत्वं स्वयमेव यथायथमूह्यम्। यथा-प्रमाणमेतादृशार्थानामपि ग्रन्थेऽत्र प्रदर्शनं कृतम्' इति प्रतिज्ञानिर्वाहं कर्तुं न पारयति। साधीयः खलु स्याद् यदि ग्रन्थकारो विशेषणशब्देषु 'सामान्ये नपुंसकम्' इति नियमानुसारेण सर्वत्र क्लीबतामाश्रयेत्। महानुभावेन तेन क्वचित् पुंस्त्वं क्वचिच्च क्लीबत्वमास्थाय न कृतः साधुनिर्वाहः। शानचि—अकयमानः, अङ्कयिष्यमाणः; यकि—अक्यमानः, अचिकिष्यमाणः; तव्ये—अकितव्यम् इति। आहोस्विद् विभक्ति-निर्देशमन्तरा पाणिनीयगणपाठवदासीच्छक्यो निर्वाहः। धातूनामकारादिक्रमिक-स्थापनावत् प्रत्ययानां क्रमोऽप्यासीत् तथैवास्थापनीयः। एवं ग्रन्थे कोशप्रणाल्याः सम्यङ्निर्वाहो नानुष्ठितः।

समष्टितः 'ग्रन्थोऽयमनधीतव्याकरणानां कृदन्तान् साधून् शब्दान् प्रयुयुक्षूणां महते फलाय प्रकल्पेतेति मन्ये' इति ग्रन्थकारस्य वचांस्यनुमोदमानो ग्रन्थस्यास्य कामं प्रचारं कामयते ॥

श्रीवागीशः शास्त्री।

# सम्पादकीयम्

## पुराणाङ्कविषये किञ्चित्

सारस्वत्याः सुषमाया विंशतितमवर्षस्यास्य प्रथमाङ्कः 'तन्त्राङ्क' नाम्ना प्रकाशितः। अमू च तृतीयचतुर्थाङ्कौ साम्प्रतं पुराणाङ्कत्वेनोपस्थाप्येते पाठकानां पुरतः। व्यतीतस्य १९६५ वर्षीयस्य सितम्बरमासस्य प्रथमदिनाङ्कतो दिनत्रयं यावद् वाराणसेयसंस्कृत-विश्वविद्यालय एका पुराणगोष्ठी समायोजिता। तत्र सम्पन्नस्य समस्तस्य कार्यविधेः, समस्तानां शुभाशंसावचसां च विवरणमत्रैवाङ्केऽन्यत्र द्रष्टव्यं प्रेक्षावद्भिः। सारस्वत्याः सुषमायाः प्रत्येकमङ्कः शतपृष्ठपरिमितो भवति। आहत्यैकस्मिन् वर्षे चतुश्शतपरिमितानि पृष्ठानि प्रकाशनीयानीति साधारणे नियमे जाग्रत्यप्यस्मिन् वर्षे तन्त्राङ्कत्वेन स्थापितः प्रथमाङ्क एव त्रिशताधिकपृष्ठपरिमितः संजात इति कृत्वाऽस्मिन् पुराणाङ्के कियान् संक्षेपः समादृतः। अत एवात्र समागतेषु निबन्धेषु केचनैव समावेशमलभन्त न सर्वे। अत्र केवलमेकोनविंशतिसंख्याका निबन्धाः प्राकाश्यन्त। तदतिरिक्तं विश्वविद्यालयोपकुलपतीनां स्वागतभाषणम्, गोष्ठीसंयोजकानां परिषदुद्देश्य-परिचयश्चात्र प्रकाशिते।

भारतीयायाः संस्कृतेर्विद्यायाश्चावबोधार्थं पुराणं विश्वकोशभूतमिति प्रसिद्धमेव। अस्मिन् वाङ्मये नैकविधानां विद्यानां संकेतो विवरणानि चावलोक्यन्ते। इमाश्च विद्या इदानीमपि विस्मयमावहन्ति। अलौकिककर्मणां विशिष्ट उल्लेखोऽपि पुराणानामेकं वैशिष्ट्यम्। इमान्यलौकिकानि कर्माण्येव सिद्धय उच्यन्ते। ताश्च सिद्धयो भगवता पतञ्जलिना जन्म-औषधि-मन्त्र-तपः-समाधिजा इति पञ्चविधा अभिमताः, तथाप्यत्र गोष्ठ्यां विचारसौकर्याय तासां क्रियात्मिकाः, ज्ञानात्मिकाः, इच्छात्मिका इति भेदत्रयमेवोररीकृतम्, पतञ्जलिप्रोक्तानामन्यासां च भेदोपभेदसहितानां सर्वासां सिद्धीनामत्रैवान्तर्भूतत्वात्। पुराणेषु विद्यमानेष्वप्यन्येषु परश्शतेषु विषयेष्वमूषां सिद्धीनां परामर्श एव मुख्यो विषय आसीदस्याः पुराणगोष्ठ्याः। त्रिविधानामप्यासां भेदोपभेदसहितानां सिद्धीनां सम्यक् परिचयः प्रकाशितेष्वेषु निबन्धेषु स्वयमेवाव-

लोकनीयो जिज्ञासुभिः। तत्र पतञ्जलिप्रोक्तानां पञ्चविधानां सिद्धीनां स्वरूपनिरूपणमत्र बहुषु निबन्धेषु दृश्यते। एवमेवाणिमलघिमेत्यादिना प्रसिद्धानामष्टविधसिद्धीनामप्युल्लेखः प्रायः प्रतिनिबन्धं द्रष्टुं शक्यते। अत एव निबन्धसंपादनवेलायां प्रायो द्विरुक्तीः परिहृत्यैवैतासां विवरणं संगृहीतम्। श्रीमद्भागवतस्य एकादशस्कन्धे पञ्चदशाध्यायेऽष्टादशसिद्धीनां वर्णनमुपलभ्यते। एताश्च सिद्धयो धारणया समुपजन्यन्ते। द्वित्रैर्निबन्धकारैरेतासामप्यत्र स्वरूपनिरूपणमकारि। बौद्धनिकायेष्वपि प्रवर्तत एतादृशीनां धारणानां माहात्म्यम्। वर्तते च जैनयोगशास्त्रेष्वपि तादृशी चर्चा। नात्र विषये केनापि किमप्युक्तम्। भारतीयानां सर्वासां विद्यानां संवादात्मकमध्ययनं नितान्तमपेक्षितम्। प्रवर्ततां नाम स व्यापारोऽनारतम्, निराविलं प्रवहेद्येन ज्ञानसरित्प्रवाहः।

परिषदुद्देश्यपरिचयं समुपस्थापयद्भिर्गोष्ठीसंयोजकैर्नानासिद्धिप्रदानां नानापुराणेषु तत्तत्प्रसङ्गेनोपात्तानाम् अनुलेपनविद्या-स्वेच्छास्वरूपधारणविद्या-सर्वभूतरुतज्ञानविद्या-उल्लापनविधानविद्या-देवहूतिविद्याभिः साकं पद्मिनीविद्या-जालन्धरीविद्या-युवकरणविद्या-वज्रवाहनिकाविद्या-मोहिनीविद्या-जृम्भणीविद्याप्रभृतीनां नैकविधानां विद्यानां स्वरूपनिरूपणमकारि। एवमेव संजीवनीविद्या तत्प्राप्त्युपायद्वयं च, नानाविधाः समाधिजाः सिद्धयो योगशास्त्रोक्ताः, सांख्योक्ता ऊहाद्या अष्टौ सिद्धयः, आकाशगमन-निर्माणकायनिर्माण-जातिस्मरत्व-परचित्तज्ञान-अन्तर्धान-अपरान्तज्ञान-कायव्यूहज्ञान-अतीतानागतज्ञानप्रभृतयः सिद्धयः, ब्रह्मवैवर्तपुराणोक्ता द्वाविंशतिधा सिद्धयः, जलस्तम्भनादिसिद्धयश्च तेषु तेषु निबन्धेषु सप्रमाणं विवृताः। इत्थं निबन्धानामेतेषां परिशीलनेन परिज्ञायते यन्न तादृशः कोऽपि सिद्धिप्रसङ्गोऽवशिष्यतेऽत्र विचारयितुम्, यस्य पुराणेषु रामायणमहाभारतयोश्च येन केनापि प्रकारेणोल्लेखो वर्तते।

स्वागतं वाचयद्भिरुपकुलपतिमहोदयैः सिद्धीनां प्रसङ्गे चत्वारः प्रश्नाः समाधेया इत्युक्तमासीत्। ते चेमे प्रश्नाः—

१—सिद्धीनां स्वरूपं पुरा कीदृशमासीत्?

२—तदा सिद्ध्युपलब्धेः प्रक्रिया कीदृश्यासीत्?

३—अधुनाऽलौकिकशक्तीनां कीदृशः परिचय उपलभ्यते ?

४—एतादृशशक्तीनामधिगमाय केषां साधनानामुपयोगः करणीयः ?

तेष्वाद्यौ द्वौ प्रश्नौ निबन्धेष्वेषु समाहितप्रायौ। अन्यौ च प्रश्नावद्यापि समाधानमपेक्षेते। सिद्धयः समाधावन्तराया उच्यन्ते योगशास्त्रेषु। शास्त्रेषु लोकस्य विश्वासोत्पादनाय ताः साम्प्रतं नितान्तमपेक्ष्यन्त इति स्वामिश्रीकरपात्रिमहोदया अपि मन्यन्ते। ताः कथमुपलभ्येरन् ? कुत्र वा तासां परिचय उपलभ्येत ? वृश्चिकसर्पदंशादिविषापहारका मन्त्राः प्रयोगा वा रहस्यावृताः सन्तीति तु सत्यम्, अत्र तु विशिष्टा ओषधिप्रयोगा अपि योग्यतमाय शिष्यायैव दातव्या इति धिया गोपिताः शनैः शनैर्विलयमाप्नुवन्ति परिज्ञातॄणामसुभिः सह। सर्वोऽपि सिद्धिप्रसङ्गो रहस्यावृतस्तिष्ठति। अधुना यत्र कुत्राप्येतादृश्योऽलौकिकशक्तयो यदि सन्ति कथं नाम तासां परिचय उपलभ्येत ? इत्यस्य प्रश्नस्य समाधानायत्त एव कीदृशः परिचय उपलभ्यत इति प्रश्नस्यापि समाधानम्। न वयं जानीमोऽभिलषितसुगन्धिसमुत्पादकाः प्रयोगाः कस्याश्चन सिद्धेः परिणामभूता अथवेन्द्रजालविद्याप्रसूता इति। अतः प्रथममलौकिकशक्तिसम्पन्ना योगिनः सिद्धाश्चान्वेषणीयाः, यत्र याथातथ्येन काश्चन सिद्धयः सन्निहिताः स्युः। अथवा ते स्वयमेव स्वामिकरपात्रिमहोदयानामुपदेशमनुरुद्ध्य प्राचीनासु भारतीयास्वलौकिकसिद्धिसम्पत्सु जनताया विश्वासोत्पादनाय कांश्चन सिद्धिप्रयोगानधिकारिणां समक्षं प्रदर्शयेयुरथ च तान् योग्यान् शिष्यान् शिक्षयेयुः। तदैव एतादृशशक्तीनां समधिगमाय केषां साधनानामुपयोगः करणीय इति चतुर्थस्य प्रश्नस्य समाधानं भवितुमर्हति। सिद्धिसम्पन्ना लोकविश्वासोत्पादनाय स्वयमभिव्यक्ता यत्र क्वचन निवसन्तो योगिन एव प्रदर्शयिष्यन्ति यदधुना तासां शक्तीनामधिगमाय देशकालानुरूपाणि कानि साधनान्यपेक्ष्यन्त इति। तपसा योगबलेन चैव सिद्धय उपलभ्यन्त इति प्रायः सर्वेषां निबन्धॄणां मतम्। कैश्चित् सिद्धीनां समुपलब्धिः प्राकृतनियमैर्वैज्ञानिकपद्धत्या च भवतीत्युक्तम्, किन्तु के ते प्राकृता नियमा वैज्ञानिकाः प्रयोगा वा, यैरधुनापि सिद्ध्युपलब्धिः संजायेतेति तत्र न किमपि प्रायोगिकं विवेचनं दृश्यते। केवलं सैद्धान्तिकमध्ययनं नाधुना सिद्धीनामुपलब्धौ फलाधायकम्। वैज्ञानिकेऽस्मिन् युगे सैद्धान्तिकेन सह प्रायोगिकेणाध्ययनेन भाव्यम्। पाश्चात्त्येषु देशेषु साम्प्रतं मनोविज्ञानविभागोपविभागेषु भारतीयस्य योगशास्त्रस्यापि प्रायोगिक-

मध्ययनं समारब्धम् । तथैवात्रापि योगशास्त्रस्याथ च मणिमन्त्रौषधीनां प्रभावस्य च प्रायोगिकमध्ययनं भवेदित्याशास्महे । योगाभ्यासनिरतानां तान्त्रिकाचार्याणां भिषक्प्रवराणां च काचन परिषत् शास्त्रेषु श्रद्धोत्पादनायास्तिक्यबुद्धेः प्रवर्तनाय च बद्धपरिकरा पावनेऽत्र कर्मणि व्याप्रियेतेति तत्तद्विषयाणां मनीषिणः संप्रार्थ्यन्ते ॥

पञ्जाबविश्वविद्यालयस्य प्राच्यो विभागः

हरियाणातः प्रेषितेन श्रीमतां रामस्वामिशास्त्रिणां पत्रेणेदमवगम्य खिद्यामो वयं यदस्मिन् वर्षे पञ्जाबविश्वविद्यालये स्थितः संस्कृतस्य प्राच्यो विभागः पञ्जाबविश्वविद्यालयेन समापितः, तत्रत्या अध्यापकाश्च बलात् स्थानान्तरिता इति । दुर्भाग्यपूर्णोऽतिमात्रमरुन्तुदश्चायमुदन्तः । अयं विभागः 'ओरियण्टल कालेज' इति नाम्ना प्रसिद्धो देशस्य प्राच्यशिक्षाकेन्द्रेष्वतिप्राचीनो मूर्धन्यो विश्वविद्यालयस्य मूलभूतः । अत्रत्यैरध्यापकैश्छात्रैश्च न केवलं पञ्जाबप्रदेशे, न च केवलं भारते देशे, किन्त्वखिलेऽपि संस्कृतजगति काचन विशिष्टा कीर्तिरर्जिता । स्वतन्त्रे भारते प्राच्यशिक्षाकेन्द्राणामाशास्यते स्म विकासः, किन्तु पञ्जाबराज्ये तद्विपरीतमेव दृश्यते । तत्रत्येन प्रशासनेन कुरुक्षेत्रविश्वविद्यालयः संस्कृतविश्वविद्यालयत्वेनोद्घोषित आसीत्, किन्त्वद्य संस्कृतं तत्र यथाकथञ्चिदुच्छ्वसिति । द्वितीयोऽयं तत्र दारुणः प्रहारः संस्कृतं प्रति यो हि पञ्जाबविश्वविद्यालये प्राच्यविभागस्य समापनरूपः । भाषावैज्ञानिका विद्वांसः प्रतिपादयन्ति यदस्य राज्यस्य भाषा सर्वासां भारतीयभाषाणामपेक्षया वैदिकभाषायाः समीपतरेति । श्रीमतां विश्वबन्धुशास्त्रिसदृक्षाणां विदुषां समुद्यमेन तस्मिन्नेव राज्ये विश्वेश्वरानन्दवैदिकशोधसंस्थानं वैदिकसाहित्यस्य श्रीवृद्ध्यै प्रयतमानं वर्तते । तत्रैव तत्रत्येन प्रशासनेन संस्कृतभाषायाः पुरातनेऽस्मिन् केन्द्रे प्रहारः कथं नाम समर्थ्येत केनचिदपि सचेतसा । साम्प्रतं तत्रत्या राजनैतिकी परिस्थितिरव्यवस्थितेव दृश्यते । आशास्यते सत्यां स्थिरतायां तत्रत्येन प्रशासनेन पञ्जाबविश्वविद्यालयस्थप्राच्यविभागस्य रक्षायै दृढं प्रयतिष्यत इति ॥

रजिस्टर्ड न्यूज पेपर्स एक्ट के नियम के अन्तर्गत

## विज्ञप्ति

| | |
|---|---|
| १. प्रकाशन का नाम | सारस्वती सुषमा |
| २. प्रकाशन की तिथि | त्रैमासिक |
| ३. मुद्रक का नाम | श्री घनश्याम उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी । |
| ४. प्रकाशक का नाम | श्री बलदेव उपाध्याय |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ५. सम्पादक का नाम | श्री बलदेव उपाध्याय, |
| राष्ट्रीयता | भारतीय |
| पता | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |
| ६. स्वामित्व | वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी । |

मैं श्री बलदेव उपाध्याय घोषित करता हूँ कि उपरिलिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है ।

श्री बलदेव उपाध्याय
हस्ताक्षर

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां मौलिकविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्गलग्रन्थानां समालोचनाः प्रकाश्यन्ते।

७. अस्या वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२" इति सङ्केतेन विधेयः।

---

प्रकाशक—संचालक अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी।
मुद्रक—श्री घनश्याम उपाध्याय, वाराणसेय संस्कृत विश्वविद्यालय मुद्रणालय, वाराणसी।